श्रीः

श्रीमन्महर्षिवरयास्कीय—

# निरुक्त(लघु)विवृतिः ।

## पञ्चपादिका ।

सेयं

स
वेविधविरुदावलीविराजमानमानोन्नतमहाराजाधिराजमिथिलेश

श्री ५ मल्लक्ष्मीश्वरसिंहबहादुर-जी-सी-आइ-ई. महोदयानां

ज्येष्ठधर्मपत्न्याः श्री ५ मल्लक्ष्मीवतीत्यन्वर्थाख्यावि-

भूषिताया धर्माधिकारिपदवीमनुसंदधता

मैथिलझोपाख्यपण्डितवर-

## श्रीमुकुन्दशर्मणा

प्रणीता परिष्कृता संशोधिता च ।


मुम्बय्यां

तुकाराम जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये बा. रा.

घाणेकरद्वारा मुद्रयित्वा प्रकाशिता ।

संवत् १९६८, सन १९१२.

## अथात्र निरुक्तोपोद्धातग्रन्थे आदितः सप्तपादात्मके समासतो विषयसंदर्भ उच्यते—



१. तत्रादौ नामाख्यातोपसर्गनिपातलक्षणम् ।

२. भावविकारलक्षणम् ।

३. नामान्याख्यातजानि सर्वाणि च यथोपन्यस्य पक्षप्रतिपक्षतो विचार्यावधारणम् ॥

४. सर्वाण्याख्यातजानि, कानिचिदेवानेकधातुजान्यपीति मन्त्राणामर्थवत्त्वानर्थवत्त्वे विचार्य शास्त्रारम्भप्रयोजनद्वारेणार्थवत्त्वावधारणम् ॥

५. पदविभागपरिज्ञानप्रतिज्ञानबोधावलम्बिप्रदर्शनायादिमध्यान्तानेकदैवतलिङ्गसङ्कटेषु मन्त्रेषु याज्ञिकपरिज्ञानद्वारेण देवतापरिज्ञानप्रतिज्ञा ॥

६. अर्थज्ञप्रशसा ॥

७. अनर्थज्ञावधीरणम् ॥

८. वेदवेदाङ्गव्यूहः ॥

९. सप्रयोजननिघण्टुसमाम्नायविरचनम् ॥

१०. प्रकरणत्रयविभागेन नैघण्टुकप्रधानदेवताभिधानप्रविभागलक्षणम् ॥

११. निर्वचनलक्षणद्वारेण शब्दवृत्तिविषयोपदेशः ॥

१२. अर्थप्राधान्याल्लोपोपधाविकारवर्णलोपविपर्ययोपदेशेन सामर्थ्योपप्रदर्शनायादिमध्यान्तलोपोपधाविकारवर्णलोपविपर्ययाद्यन्तवर्णव्यापत्तिवर्णोपजनोदाहरणचिन्ता ॥

१३. अन्तस्थान्तर्धातुनिमित्तेन संप्रसार्यासंप्रसार्योभयप्रकृतिधातुनिर्वचनोपदेशः ॥

१४. भाषिकप्रायोवृत्तिभ्यो नैगमशब्दार्थप्रसिद्धिः ॥

१५. नैगमप्रायोवृत्तिभ्यो भाषिकशब्दार्थप्रसिद्धिः ॥

१६. देशव्यवस्थया शब्दरूपव्यपदेशः ॥

१७. तद्धितसमासनामनिर्वचनलक्षणम् ॥

१८. शिष्यलक्षणम् ॥

॥ इति ॥

कलिवत्सराः ५००९
शकवत्सराः २४८३
विक्रमवत्सराः १९६५
शालिवाहनवत्सराः १८३०
लक्ष्मणसेनवत्सराः ७४८
ईशवीयवत्सरास्तु १९०९

शरतर्करत्नपृथिवी–१९६५ ।
मितवैक्रमवत्सरे तपसि सुदिके ॥
करमाहावंशाम्बुधि-
चन्द्रो व्यलिखन्मुकुन्दोऽदः ॥ १ ॥
शुभं भूयात् ॥

# अथ निरुक्तविवृत्युपोद्घातः ॥

अथ—सर्वकामप्राप्त्यादिर्मोक्षान्तःपुरुषार्थोवेदप्रतिपाद्यः। तत्परिज्ञा-
नाय शिक्षा-छन्दः-कल्पो-ज्यौतिषं-व्याकरणं-निरुक्त-मिति अङ्गानि प्रवृ-

---

१ अतएवैषामपरविद्यात्वं मुण्डकोपनिषद्याथर्वणिका आमनन्ति "द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवाऽपरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति । अथ परा यया तदक्षरमधिगम्यते" इति । साधनभूतधर्मज्ञानहेतुत्वात्षडङ्गसहितानां कर्म-काण्डानामपरविद्यात्वम् । परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वादुपनिषदां परविद्यात्वम् ॥ तत्र—वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा **शिक्षा** । तथाच तैत्तिरीया उप-निषदारम्भे समामनन्ति "शिक्षां[1] व्याख्यास्यामः । वर्णः स्वरः मात्रा बलं साम सन्तान इत्युक्तः शिक्षाध्याय"इति ( तै० आ० ७ म प्र० ) वर्णोऽकारादिः सचाङ्ग-भूतशिक्षाग्रन्थे स्पष्टमुदीरितः "त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः संभवतो[2] मताः । प्राकृते संस्कृते चाऽपि स्वयं प्रोक्ताः स्वयंभुवा ॥ १ ॥" इत्यादिना ( पा० शि० ३ श्लो० ) स्वर उदात्तादिः। सोऽपि तत्रोक्तः "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः" इति ॥ मात्रा ह्रस्वादिः। सापि तत्रोक्ता "ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचीति" ॥ बलं स्थानप्रयत्नौ ॥ तत्र अष्टौ स्थानानि वर्णानामित्यादिना स्थानमुक्तम् । अचोऽस्पृष्टा यणस्त्वीषदित्यादिना प्रयत्न उक्तः । सामशब्देन साम्यमुक्तम् । अतिद्रुतातिविलम्बि-तगीत्यादिदोषराहित्येन माधुर्यादिगुणयुक्तत्वेन चोच्चारणं साम्यम् । तत्र गीती शीघ्रीशिरःकम्पीत्यादिना, उपांशु दष्टं त्वरितमित्यादिना च दोषा उक्ताः । माधुर्य-मक्षरव्यक्तिरित्यादिना गुणा उक्ताः । सन्तानः संहिता साच "परः सन्निकर्षः संहि-ते"ति ( १-४-१०९ ) पाणिन्युक्तरूपा । सा[3] यथा "वायवायाहि" ( ऋ० सं० १-१-३ ) इत्यत्रावादेशः । "इन्द्राग्नी आगत-"( ऋ० सं० ३-१-१० ) मित्यत्र प्रकृतिभावः । एतच्च व्याकरणेऽभिहितत्वाच्छिक्षायामुपेक्षितम् । शिक्ष्यमाणवर्णा-दिवैकल्ये बाधस्तत्रोदाहृतः । यथा—"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो

1 अत्र शीक्षेतिदीर्घमध्यः पाठः सायणेन ऋग्भाष्यभूमिकायां धृतः ॥

2 शम्भुमते मता इति प्रचुरः पाठः । प्राकृत इति लोकोक्तिमभिप्रेत्य नतु कात्या-यनाद्युक्ते प्राकृतभाषारूपे । तत्रतु चत्वारिंशदक्षरैरेव सर्वप्रयोगसिद्धिरुक्ता । यथाहुर्लक्ष्मी-धरार्याः प्राकृतषड्भाषाचन्द्रिकायाम् । 'सिद्धिः संस्कृतशब्दानां भवेत्पञ्चाशदक्षरैः । प्राकृतानान्तु सिद्धिः स्यात्तैश्चत्वारिंशदक्षरैः । ऋऌवर्णौविनैकारौकाराभ्याञ्च दश स्वराः । शषावसंयुक्तङञौ विनैवान्ये हलो मताः" इति ॥

3. सेत्यनेनात्र तत्कार्यं "संहितायां"–( पा० ६–१–७२ ) मित्यधिकारोक्तमुच्यते ॥

न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥१॥" इति ॥ इन्द्रशत्रुर्वर्धस्वेत्यस्मिन्मन्त्रे इन्द्रस्य शत्रुर्घातक इत्यस्मिन्विवक्षितेऽर्थे तत्पुरुषसमासे "समासस्ये" (पा० ६ । १ । २२३) ति सूत्रेण तत्पुरुषत्वादन्तोदात्तेन भवितव्यम् । आद्युदात्तस्तु प्रयुक्तः । तथासति बहुव्रीहित्वा"द्बहुव्रीहौ प्रकृत्या पूर्वपद"मिति पूर्वपदप्रकृतिस्वरत्वेन इन्द्रः शत्रुर्घातको यस्येत्यर्थः संपन्नस्ततश्च वृत्र उदभूदित्याद्युपरिष्टाद्व्यक्तीभविष्यति । तस्मात्स्वरवर्णाद्यपराधपरिहाराय शिक्षाग्रन्थोऽपेक्षितः ॥ १ ॥ कल्पस्त्वाश्वलायनापस्तम्बबौधायनादिसूत्रं, कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्तेः । स यथा—इषेत्वेति छिनत्ति, ऊर्जेत्वेत्यनुमार्ष्टीत्यादि । नहि कल्पानभिज्ञः प्रयोगान्विजानीयादतः कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुपदिश्योपकरोति तस्माच्छिक्षेव कल्पोऽप्यपेक्षितः ॥ २ ॥ व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयायोपयुज्यते[2] । तथाचेन्द्रवायव्यग्रहब्राह्मणे समाम्नायते "वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकुर्विति । सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्यता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते" (तै० सं० ६–४–७) ति । अस्यार्थः । अग्निमीडे पुरोहितमित्यादिवाक् पूर्वस्मिन्काले पराची—समुद्रादिध्वनिवदेकात्मिका सती अव्याकृता प्रकृतिः प्रत्ययः पदं वाक्यमित्यादिविभागकारिग्रन्थसंघरहिताऽऽसीत् । तदानीं देवैः प्रार्थित इन्द्र एकस्मिन्नेव पात्रे वायोः स्वस्य च सोमरसग्रहणरूपेण वरेण तुष्टस्तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययादिविभागं सर्वत्राकरोत् । तस्मादियं वागिदानीमपि पाणिन्यादिमुनिभिर्व्याकृता सर्वैः पठ्यत इति ॥ ३ ॥ निरुक्तं तु "पदविभागमन्त्रार्थदेवतानिरूपणार्थं शास्त्रं निरुक्त"मिति शौनकीयबह्वृक्प्रातिशाख्यद्वितीयवृत्तिकारो देवमित्रपुत्रो विष्णुमित्रः प्राह । एतच्च (तथाविधशास्त्रत्वं) प्रवृत्तिनिमित्तभूतलक्षणं निरुक्तस्य । तत्पदप्रवृत्तिनिमित्तं तु "एकैकस्य पदस्य संभाविता अवयवार्था-

1. अयं क्रमोऽत्रोपदर्शितश्रुत्युक्तक्रमेण व्याख्यातः । मूले त्वध्ययनक्रमेण क्रमो दर्शितः । शिक्षाच्छन्दसोः पाठसहभावनियमाद्व्याकरणनिरुक्तयोरपि क्रमेण शब्दार्थज्ञानायोपयुज्यमानयोः सहभावस्य यास्केनैव (नि० १–५–१) बोधनात्तत्र निरुक्तस्य सर्वमूर्धन्यत्वेन सर्वान्ते प्रतिज्ञानमर्थज्ञान (फल) पर्यवसायित्वादङ्गानामिति कल्पज्यौतिषयोः क्रमेण यथोपयोगं मध्ये संनिवेशनम् । अयमर्थः । पूर्वमुपनीतेन स्वाध्यायोऽध्येतव्यः कथमित्युच्चारणनियमनाय शिक्षाऽपेक्षिता, वर्णादीनां स्थानादिनैयत्ये ज्ञातेऽपि कतमेन छन्दसा प्रयोज्यमिति छन्दः । कथं प्रयोज्यमिति कल्पः । कदा कर्माङ्गतया प्रयोज्यमिति ज्यौतिषम् । तदेवंप्रयोगे समनुशिष्टेऽध्ययनस्यार्थज्ञानफलकत्वात्तदन्तरा कर्मासमृद्धेरुक्तत्वाद्व्याकरणेन शब्देऽर्थे चांशतो ज्ञाते तस्य कार्त्स्न्यं निरुक्तेनेत्यादि (नि० १–अ० ५–६ पा०) द्रष्टव्यमिति ॥

2. प्रयोजनविशेषोऽस्य कात्यायनेन दर्शितः पतञ्जलिना स्पष्टीकृतश्च (महाभा० १–१–१ आ०) द्रष्टव्यः ॥

स्तत्र निःशेषेणोच्यन्त" इति सायणः प्राह । निश्शेषेण व्याकरणानुशिष्टेन, वर्णागमादिनिरुक्तलक्षणलक्षितेन वर्त्मना विशदीकरणेन । तथा च पाणिनिसूत्रम् । "पृषोदरादीनि यथोपदिष्टम्" ( ६-३-१०९ ) इति । अनेन हि वर्णागमादि ५ सर्वमपि संक्षेपेण विहितं तदेव निरुक्ते विशदीकृत्य प्रदर्शितम् । तथाच तत्र ( पृ० सू० ) महाभाष्यम्—पृषोदरादीनीत्युच्यन्ते कानि पृषोदरादीनि ? पृषोदरप्रकाराणि । कानि पुनः पृषोदरप्रकाराणि ? येषु लोपागमवर्णविकाराः श्रूयन्ते नचोच्यन्ते ( ६ अ० ३ पा० ३ आ० ) इति । ते चात्र ( यास्कीये निरुक्ते ) विशेषेणोच्यन्त इति निरुक्तत्वमस्यापि । यथाह हरिः—"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ॥ धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ १ ॥" इति ॥ एतन्निरुक्तलक्षणलक्षितं वेदाङ्गान्तःपात्यन्यदपि शाकपूण्यादिप्रणीतं शास्त्रं वर्तते यल्लक्षणमुपक्रमे विष्णुमित्रोक्तमुपवर्णितम् ॥ एतन्मूलकएव चतुर्दशधानिरुक्तमितिलेखो दुर्गाचार्यस्य निरुक्तव्याख्यायामृज्वर्थाख्यायां वेदाङ्गानिचे-( नि० १-६-६ ) त्यस्य व्याख्याने दृष्टोऽस्ति । यास्केनापि "नैरुक्तसमयः । नैरुक्ताः ।" इत्येवं तत्रतत्र प्रदर्शनेनोक्तार्थः सूचित एव ॥ एतन्मूलसूत्रभूते पञ्चाध्यायीशास्त्रसंग्रहे निघण्टुपरनामके गवादिदेवपत्न्यन्ते शब्दसमुदाये "अर्थावबोधनिरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्त"[2]मिति सायणोक्तनिरुक्तत्वं तु

---

1. निर्वचनलक्षणसाजात्यात् । वेदाङ्गत्वमपि तथैव । नह्यन्यथाऽनादिश्रुतिचोदिते पूर्वोक्ताथर्वणिकवाक्येऽर्वाचीनानामुल्लेख उपपद्यते । अतएव च छान्दोग्योपनिषदि श्रूयते "स वा एष आत्मा हृदि तस्य तदेव निरुक्तं हृदयमिति तस्माद्धृदयम्" ( ८-३-३ ) इति । एवं गोपथब्राह्मणेऽपि "ओंकारं पृच्छामः * * किंनिरुक्तम् ? * * आपेरोंकारः सर्वमाप्नोतीत्यर्थः ( १-१-२४-३० ) एवमन्यत्रापि । नह्येषां हृदयौंकारादीनां सत्यपि प्रसङ्गे निर्वचनमत्र ( या० नि० ) समस्ति । एवमेषां षण्णामप्यङ्गानां तत्तल्लक्षणलक्षितानां श्रुतिब्राह्मणादिषु समुट्टङ्कनादनादित्वम् ।

2. एतत्समन्वयप्रकारश्च तेनैव ( सायणेन ऋग्भाष्यभूमिकायां ) दर्शितः । योऽयं गौरित्यादिपदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते—एतावन्ति पृथिवीनामधेयानि—एतावन्ति हिरण्यनामधेयानि—इत्येवं तत्र विस्पष्टमभिहितत्वात् । तदेतन्निरुक्तं त्रिकाण्डम् । तत्र—एकार्थवाचिनां पर्यायशब्दानां संघो यत्र प्रायेणोपदिश्यते तत्र निघण्टुशब्दः प्रसिद्धः । तादृशेष्वमरसिंह—वैजयन्ती—हलायुधादिषु दशनिघण्टव इति व्यवहारात् । एवमत्रापि पर्यायशब्दसंघोपदेशादाद्यकाण्डस्य नैघण्टुकत्वम् । तस्मिन्काण्डे त्रयोऽध्यायाः । तेषु प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि नामानि । द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि । तृतीये तदुभयद्रव्यगततनुबहुत्वह्रस्वत्वादिधर्मविषयाणि । निगमशब्दो वेदवाची यास्केन तत्रतत्रापि निगमो भवतीत्येवं वेदवाक्यानामवतारितत्वात् । तस्मिन्निगम एव प्रायेण वर्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन्काण्डे उपदिष्टत्वात्तस्य काण्डस्य नैगमत्वम् । पञ्चमाध्यायरूपतृतीयकाण्डस्य

तादर्थ्यात्ताच्छब्द्यमिति न्यायेन द्रष्टव्यम् । यथाऽणादिप्रत्याहारमूलसूत्रभूते "अइउण् ऋऌक्" इत्यादिवर्णसमाम्नाये प्रत्याहारपदप्रयोगः "प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न । आचारादप्रधानत्वाल्लोपश्च बलवत्तर" इति श्लोकवार्तिके कात्यायनोक्ते तन्महाभाष्ये च दर्शित इति तस्यापि प्रत्याहारत्वम् । प्रत्याह्रियन्ते संक्षिप्य बोध्यन्ते वर्णा यत्रेति तन्निर्वचनात्[1] । प्रत्याहारे ( प्रत्याहारार्थे ) वर्णसमाम्नाये यान्येतान्यज्ग्रहणानि[2] अज्ग्राहकाणि "अइउण् ऋऌक् एओङ् ऐऔच्" इत्येतानि चतुःसूत्राणि तेष्वनुबन्धानां णकारादीनां चतुर्णामित्संज्ञकानां वर्णानां ग्रहणं कथं नेत्येवं हि तदर्थः ॥ एतन्मूलिकैव च "एवं निघण्टवोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एवेति" प्रस्थानभेदीया मधुसूदनसरस्वत्युक्तिरपि इति प्रतिभाति । एवं शिक्षाव्याकरणाभ्यां वर्णोच्चारणपदसाधुत्वे ज्ञाते वैदिकमन्त्रपदानामर्थज्ञानाकाङ्क्षायां तदर्थं भगवता यास्केन "समाम्नायः समाम्नातः स व्याख्यातव्य इत्यादि त्रयोदशाध्यायात्मकं निरुक्तमारचित–"मित्यादि तदीयोपक्रमोक्तेः । तथा चैतन्मूलकमेव दुर्गाचार्यस्यापि निरुक्तप्रथमाध्यायान्ते "इति निरुक्तविवृतौ षष्ठोऽध्याय" इति प्राचीनपुस्तके लिखनं मुद्रितपुस्तकेषूपलब्धं द्रष्टव्यम् ॥ इत्थंच तस्याश्चतुर्दशसूत्र्या वेदप्रतिपादकवर्णसमुदायत्वेन वर्णसमाम्नायत्ववदस्या अपि पञ्चाध्याय्या वैदिकशब्द–( समुदायत्वेन ) समाम्नायत्वं छन्दोधर्मित्वं च वक्ष्यते व्याख्यारम्भे । एवंचास्य निघण्टोर्न[3] वेदाङ्गत्वमपि तु वेदत्वमेव । आम्नायसमाम्नायशब्दयोर्वेद एव प्रसिद्धेरिति चतुर्दशसूत्रीव्याख्यायां नागेशभट्टाः प्राहुः । तथाचास्यापिज्ञाने चतुर्वेदपारायणजन्यपुण्यफलावाप्तिर्भवतीत्यपि तत्रैव ( श० शे० ) द्रष्टव्यम् । अस्य ( यास्कीयस्य ) निरुक्तत्वं न केवलं निर्वचनलक्षणोपदेशमात्रेण । यथाच वक्ष्यति द्वितीयाध्यायारम्भे "अथ निर्वचनम्–" इत्यादि "नैकपदानि निर्ब्रूयादि–" त्यन्तेन ग्रन्थसारभूतेन संदर्भेण अपि तु भगवता कात्यायनेनाप्युक्तं भ्राजानामश्लोकग्रन्थे—"बाहुलकं प्रकृतेस्तनु-

---

दैवतत्वं विस्पष्टम् ॥ एवं पञ्चाध्यायरूपकाण्डत्रयात्मके एतस्मिन्ग्रन्थे परनिरपेक्षतया पदार्थस्योक्तत्वात् तस्य ग्रन्थस्य निरुक्तत्वम् ॥ इति ॥

1. अयंच निर्वचनप्रकारो योगार्थसंबन्धवशेन प्रत्याहारपदस्यात्र केवलयौगिकत्वमित्येतद्बोधनाय । यथा निरुक्तपदस्य निघण्टावपि सायणेन दर्शितो योगार्थसंबन्धः । निरूढिस्तु यथाप्रत्याहारपदस्य "आदिरन्त्येने–" ( पा० १–३–७१ ) त्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्त" इति दीक्षितोक्तदिशाऽणादिष्वेव । एवं निरुक्तपदस्यापि शाकपूणियास्काद्युक्ते निर्वचनलक्षणलक्षिते शास्त्रएव निरूढिरितीमौ (प्रत्याहारनिरुक्तशब्दौ ) योगरूढीभवत इति तत्त्वम् ।

2. अज् गृह्यते एभिरिति करणे गृह्णातेः "करणाधिकरणयोश्च" (पा० ३–३–११७) ति ल्युट् ॥

3. यास्केनापि निघण्टोर्वेदाङ्गात्पृथग्भाव एव दर्शितः ( निरु० १–६–५ ) ॥

दृष्टेर्नैगमरूढिभवं हि सुसाधु ॥ नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ॥ १ ॥" इति ॥ एतद्व्याख्यानावसरे भगवान्पतञ्जलिरप्याह "नाम खल्वपि धातुजमेवमाहुर्नैरुक्ताः" ( ३ अ० २ पा० ३ अ० ) इत्यादि । एतच्चात्रैव ( नि० १–४–१ ) प्राधान्येन चिन्तितमस्तीत्यस्य निरुक्तत्वमाभ्यामप्यनूक्तमित्यलं पल्लवितेन । नच निर्वचनानां निर्मूलत्वं शङ्कनीयमेतद्युत्पत्त्यर्थमेव ब्राह्मणेषु पदनिर्वचनानां केषांचिदुक्तत्वात् 'तदाहुतीनामाहुतित्वमिति, तमिदंन्द्रं सन्तमिन्द्रमित्याचक्षत' इति । 'यदप्रथयत्तत्पृथिव्याः पृथिवीत्वमि'ति चैवमादि । ग्रन्थकारोऽपि तत्र तत्र स्वोक्तनिर्वचनमूलभूतब्राह्मणानि उदाहरिष्यति । केषांचिन्निर्वचनानां व्याकरणेन सिद्धावपि न सर्वेषां तेन सिद्धिरस्तीति ग्रन्थकारो ( यास्को ) वक्ष्यति "तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं चेति" ( निरु० १–५–१ ) तस्माद्वेदार्थावबोधायोपयुक्तं निरुक्तम् ॥ ४ ॥ तथा **छन्दोग्रन्थो**ऽप्युपयुज्यते छन्दोविशेषाणां तत्र तत्र विहितत्वात् । "तस्मात्सप्तचतुरुत्तराणि च्छन्दांसि प्रातरनुवाकेऽनूच्यन्त" इति ह्याम्नातं गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीत्येतानि सप्त छन्दांसि । चतुर्विंशत्यक्षरा गायत्री । ततोऽपि चतुर्भिरक्षरैरधिकाष्टाविंशत्यक्षरोष्णिक् ।' एवमुत्तरोत्तराधिका अनुष्टुबादयोऽवगन्तव्याः । तथा चान्यत्रापि श्रूयते "गायत्रीभिर्ब्राह्मणस्यादध्यात्त्रिष्टुब्भी राजन्यस्य जगतीभिर्वैश्यस्ये"ति । तत्र मगणयगणादिसाध्यो गायत्र्यादिविवेकश्छन्दो ग्रन्थमन्तरेण न सुविज्ञेयः । तस्मात्तद्वेदनाय च्छन्दोग्रन्थ उपयुज्यते ॥ ५ ॥ **ज्यौतिषस्य** प्रयोजनं तु तस्मिन्नेव ( वेदाङ्गज्योतिर्निबन्धे )

1. अत्रालंशब्दार्थस्तु । यत्पुनरर्थावबोधनिरपेक्षतयेत्यादिनिरुक्तलक्षणमुपक्रम्य ( समन्वय्य च ) "पञ्चाध्यायरूपकाण्डत्रयात्मकेऽस्मिन्ग्रन्थे परनिरपेक्षतया पदार्थस्योक्तत्वात्तस्य ग्रन्थस्य निरुक्तत्वमिति । तद्व्याख्यानं च समाम्नायः समाम्नात इत्यारभ्य–तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवतीत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे तदपि निरुक्तमित्युच्यते । एकैकस्य पदस्य संभाविता अवयवार्थास्तत्र निश्शेषेणोच्यन्त इति व्युत्पत्तेः" इत्येवं वचनभङ्ग्या यदस्य गौणंनिरुक्तत्वं निघण्टोस्तु मुख्यमिति सायणऋग्भाष्यभूमिकायामभिदधौ तदस्य निघण्टोरेव काण्डत्रयात्मकेन सपरिशिष्टेन पूर्वषट्कोत्तरषट्कात्मकद्वादशाध्यायेन व्याख्यानाख्येयस्य च ( व्याख्यानापेक्षया ) मुख्यत्वात्तस्यैव निरुक्तत्वमस्य च तद्भाष्यभूतत्वादस्ति कथंचिन्निरुक्तत्वमित्यभिमत्यावयवार्थमपि निरुक्तशब्दस्य कथंचिदत्रान्वयितवान्परमस्य भाष्यभूतस्य निर्वचनग्रन्थस्यैव निरुक्तलक्षणलक्षितत्वं श्रुत्यादिसंमतमिति स नावहितवानिति तस्याभिमतिरभिहितास्माभिर्निरुक्तालोचनवद्भिरिति ॥

2. स्वोत्प्रेक्षितत्वमात्रम् ॥

3. एतत्तत्वमनुपदं निरुक्तप्रवृत्त्युपक्रमे स्फुटीभविष्यति ॥

4. ऐत० ब्रा० चतुर्थाध्यायतृतीयखण्डे ॥

5. तै० ब्रा० १–३–३ ॥

6. तै० ब्रा० १–१–९ ) ॥

स्थानि ॥ तत्र तावत्-यथावदध्ययनपरिज्ञानाय शिक्षाऽपेक्ष

ग्रन्थेऽभिहितम् "यज्ञकालार्थसिद्धय" इति । कालविशेषविधयश्च श्रूयन्ते "संवत्सर-मेतद्व्रतं चरेत्[1] ।" "सँव्वत्सरमुख्यं भृत्वे" त्येवमादयः[2] संवत्सरविधयः । "वसन्ते ब्राह्मणोऽग्नीनादधीत[3] ग्रीष्मे राजन्यः शरदि वैश्य" इत्याद्या ऋतुविधयः ॥ "मासि-मासि सत्रपृष्ठान्युपयन्ति" मासिमास्यतिग्राह्या गृह्यन्त" इत्याद्या मासविधयः ॥ "यं कामयेत वशीयान्स्यादिति तं पूर्वपक्षे याजयेत्" इत्याद्याः पक्षविधयः ॥ "एकाष्टकायां दीक्षेरन्फल्गुनीपूर्णमासे दीक्षेरन्" इत्याद्यास्तिथिविधयः ॥ "कृत्तिका-स्वग्निमादधीते–" त्याद्या नक्षत्रविधयः ॥ "प्रातर्जुहोति सायं जुहोती" त्याद्याश्च प्रातःकालादिविधयः ॥ अतः कालविशेषानवगमयितुं ज्यौतिषमुपयुज्यते ॥ एतेषांच वेदार्थोपकारिणां षण्णां ग्रन्थानां वेदाङ्गत्वं शिक्षायामप्युक्तम्—

"छन्दः पादौ तु वेदस्य हस्तः कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ १ ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ २ ॥"

इति । वेदाङ्गानां षड्त्वपरिसंख्यानं तु गोपथादिवचनबलादवगतम्–तथाच गोप-थब्राह्मणम्–"षडङ्गविदस्तत्तथाधीमहे" ( १–१–२७ ) इति । पातञ्जलमहाभाष्यादौ स्मर्यते च "आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति"[4] ( १– अ० १ पा० ३ आ० ) । प्रस्थानभेदे मधुसूदनसरस्वतीभिरप्युक्तं "वेदाङ्गानि षडि"ति ॥ एवं ( वेदाङ्गवत् ) वेदोपाङ्गानामपि पुराणेतिहासशास्त्राणां लौकिकानां ग्रन्थविस्तररचनानां च वेदार्थज्ञानायाध्ययनोपयोगो याज्ञवल्क्येन स्मर्यते—

"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ १ ॥" इति ॥

( १ अ० श्लो० ३ ) अन्यत्रापि स्मर्यते—

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ॥ १ ॥" इत्यादि ॥

---

1. तै० आ० प्रथमप्रपाठके ॥

2. तै० स० ५–६–५ ॥

3. तै० ब्रा० १–१–२ ॥

4. अत्र–ज्ञेयश्चेत्युक्त्या–स्वाध्यायोऽध्येतव्य इत्यध्ययनस्याक्षरग्रहणान्तत्वेऽर्थज्ञानमविहितं स्यादिति केषांचिदुक्तिः पराहता । अत्रच निष्कारणशब्देनाध्ययनज्ञानयोः काम्यत्वं निवार्यते । तथा चार्थज्ञाने पुरुषप्रवृत्तिकरं वचनद्वयं शाखान्तरगतं निरुक्तकारो यास्क एवोदाजहार–अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च "स्थाणुरयं भारहारः किलाभूद-धीत्यवेदं न विजानातियोऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा" ॥१ ॥

अध्ययनविधेस्तस्या अन्यतः प्राथम्यात् । ततश्च वेदस्याक्षर-

१ "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते"ति प्राप्तवेदाध्ययनाधिकारमुद्दिश्य "स्वाध्यायोऽध्येतव्यः । स्वाध्यायमधीयीते"त्यादि ब्राह्मणवचनैरध्ययनं गुरुमुखाद्यथावदुपदिश्यत इति ॥

'यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥२॥ इति । अस्मिन्मन्त्रद्वये योऽर्थज्ञ इत्यनेनैवार्धेन वेदार्थज्ञानं प्रशस्यते । इतरेणार्धत्रयेण ज्ञानराहित्यं निन्द्यते। यो वेदार्थं जानाति सोऽयमिह लोके सकलश्रेयः प्राप्नोति । तथा तेन ज्ञानेन पापक्षये सति मृतः स्वर्गं प्राप्नोति । तदेतदैहिकामुष्मिकं च ज्ञानफलं तैत्तिरीया मन्त्रोदाहरणेन तदीयतात्पर्याभिधायिब्राह्मणेन च स्पष्टीचक्रुः—"तदेषाभ्युक्ता ये अर्वाङ्गुत वा पुराणे वेदं विद्वांसमभितो वदन्त्यादित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हंसमिति । यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणातीति" । ( तै० आ० द्वि० अध्याये ) वेदं विद्वान् अर्थाभिज्ञः पुरुषः स च द्विविधः । अर्वाचीनकाले समुत्पन्नश्चतुर्दशविद्यास्थानकुशलः कश्चिदुपाध्यायः । पुरातनकाले समुत्पन्नो व्यासादिश्च, तमेतमुभयविधं विद्वांसं विद्यामद—धनमद—कुलमदोपेताः पण्डितंमन्या ये पुरुषा अभितो विद्यादिषु दूषयन्ति ते सर्वेऽप्यादित्यमेव प्रथमं दूषयन्ति आदित्यापेक्षया द्वितीयमग्निं दूषयन्ति । तदुभयापेक्षया तृतीयं हंसं दूषयन्ति । हन्ति सदा गच्छतीति हंसो वायुः । अग्न्यादिरूपत्वं च वेदविद आम्नातम् तत्रैव । 'अग्नेर्वायोरादित्यस्य सायुज्यं गच्छती'ति ॥ न केवलमेतद्देवतात्रयं किंतु सर्वा एव देवता वेदविदि वसन्ति । ब्राह्मणान्वेदविदो दृष्ट्वा स्मृत्वा वा प्रतिदिनं नमस्कुर्यात् । नतु तस्मिन्विद्यमानमपि दोषं कीर्तयेत् । एवं सति तत्र मन्त्रार्थभूताः सर्वा अपि देवता वेदार्थविदा स्मर्यमाणतया तदीयहृदयेऽवस्थिता अयं नमस्कर्ता तोषयति । नचैतदध्ययनस्यैव फलमिति शङ्कनीयं विद्वांसमित्याम्नातत्वात् । अन्यथा वेदमधीयानमित्याम्नायेत । तस्मात्सर्वदेवताबुद्ध्या प्राणिभिः पूज्यस्य वेदार्थविदो लोकद्वयेऽपि श्रेयःप्राप्तिरुपपद्यते । यस्तु वेदमधीयास्यार्थं न विजानाति सोऽयं पुमान्भारमेव हरति धारयति । स्थाणुरिति दृष्टान्तः । छिन्नशाखं शुष्कं वृक्षमूलं स्थाणुशब्देनोच्यते । स च यथेन्धनार्थमेवोपयुज्यते नतु पुष्पफलार्थं तथा केवलपाठकस्य व्रात्यत्वं न भवतीत्येतावदेव, नत्वनुष्ठानं स्वर्गादिफलसिद्धिर्वास्ति । किलेत्यनेन लोकप्रसिद्धिर्द्योत्यते । लोकेऽपि पाठकस्य यावती धनादिपूजा ततोऽभ्यधिका विदुषि दृश्यते । किंच यद्वेदवाक्यमाचार्याद्गृहीतमर्थज्ञानरहितं पाठरूपेणैव पुनःपुनरुच्चार्यते तत्कदाचिदपि न ज्वलति स्वार्थं न प्रकाशयति । यथाग्निरहितप्रदेशे प्रक्षिप्तं शुष्ककाष्ठं न ज्वलति तद्वत् । तथासति तस्य वाक्यस्य वेदत्वमेव मुख्यं न स्यात् । अलौकिकपुरुषार्थोपायं वेत्त्यनेनेति वेदशब्दनिर्वचनम् । तथाचोक्तम्—

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ १ ॥" इति ॥

अतो मुख्यवेदत्वसिद्ध्यै ज्ञातव्य एव तदर्थः ॥ इत्थंच "यच्च स्तूयते तद्विधीयत" इति न्यायेनाध्ययनवदर्थज्ञानस्यापि विधिरभ्युपगन्तव्यः ॥

कोऽशपादव्यवस्थालक्षणपरिज्ञाने छन्दोविचितिराद्रियते। सम्यगधीतस्य परिज्ञातच्छन्दसोऽमुष्मिन्कर्मणि विनियोग इति कल्प आद्रियते । श्रुतिचोदितकर्माङ्गभूतकालपरिज्ञानाय ज्यौतिषम् ॥ व्याकरणाद्विभक्त्यादिपरिज्ञानम् । एवं ह्याह"प्रयाजाः सविभक्तिकाः कर्तव्याः" तथाचेदं दर्शयति "संख्यादयो न विवर्धन्त"-इति । एवमादि । नच व्याकरणानभिज्ञो विभक्तीर्जानीयात् । ऊहितुं वा मन्त्रान् ॥ इतएव चानुषङ्गतो लोके लौकिकलक्षणपरिज्ञानमेवं छन्दस्येवं भाषायामिति प्रविभागो नान्तरीयकोऽनन्तरेण व्यवस्थितः । अत उक्ताध्ययनविधेरुक्तछन्दःप्रविभागस्योपलक्षितकर्माङ्गभूतकालस्योपलक्षितलक्षणस्यैतैरङ्गैर्वेदार्थपरिज्ञानविषये निरुक्तं नामेदमङ्गमारभ्यते । प्रधानं चेदमितरेभ्योऽङ्गेभ्यः सर्वशास्त्रेभ्यश्चार्थपरिज्ञानाभिनिवेशात् । अर्थो हि प्रधानं । तद्गुणः शब्दः सचेतरेषु व्याकरणादिषु चिन्त्यते । कल्पे खल्वपि विनियोगश्चिन्त्यते । सच पुनरर्थोऽभिधानवशेन मन्त्राणाम् । योयमर्थमभिधानेन संस्कर्तुं समर्थो मन्त्रः स तत्र विनियुज्यते। तदुक्तम् "अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यादि"-( जै० ३-२-१ ) ति । तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसंग्रहः । तन्निर्विवक्षया समारब्धमिदं समाम्नायः समाम्नात इत्यारभ्य य ऋतुः कालो जायानाम् २ इत्यन्तैर्द्वादशभिर-

---

१ कोशो राशिः । इयताक्षरकोशेनेयद्भिः पादैर्गायत्री इयद्भिस्त्रिष्टुबित्येवम् । नह्यविज्ञातच्छन्दसा प्रयुज्यमानो मन्त्रः कर्मण्यार्थकः स्यात् । एवं हि श्रूयते "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा, स्थाणुं वर्छति गर्तं वा पद्यति प्रवामीयते पापीयान्भवति यातयामान्यस्य च्छन्दांसि भवन्ति तस्मादेतानि मन्त्रे मन्त्रे विद्यादि"ति ॥ अनुषङ्गतश्चातो वक्रादिच्छन्दोलक्षणपरिज्ञानपरिज्ञानं लोकेऽत्र लौकिकमितित्याह ॥

२ अनुषङ्गतश्चातः प्राणिनां शुभाशुभकर्मफलविपाक–काल–परिज्ञानमित्याह ॥

३ अत्र तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवतीत्यन्तैर्द्वादशभिरध्यायैरिति ऋग्भूमिकायां सायण आह। तस्य सपरिशिष्टैरित्येवमाशयोऽवगन्तव्यः । तस्यास्तस्या इत्याद्युक्तेस्त्रयोदशाध्यायप्रथमपादान्ते दर्शनात् । तदन्तग्रन्थसन्दर्भेणैव निरुक्तवक्तव्यार्थपरिसमाप्तेः तदग्रेतनेन व्याख्यातं दैवतमित्यादिना ग्रन्थसन्दर्भेण तथावगमात् । अतएव च निरुक्तवृत्तिकृता दुर्गेण तावानेव ग्रन्थसंदर्भो निरुक्तव्याख्यारूपतया व्याख्यातः । तेन हि ग्रन्थारम्भे निरुक्तस्य द्वादशाध्यायीत्वमुक्त्वाऽपि अन्ते सपादद्वादशाध्यायीत्वमुक्तं फलतस्त्रयोदशाध्यायीत्वमेव स्वीकृतम् । एतदेव चानुसृतं प्रस्थानभेदनामग्रन्थे मधुसूदनसरस्वतीभिः । एवं च वृत्तिकृन्मतेऽतिस्तुतिरूपत्रयो-

**ध्यायैर्नैघण्टुक-नैगम-दैवतेति नामभिन्नं काण्डत्रयम् ॥ तत्र ( नैघण्टुककाण्डे ) आदितः सपादेन द्वितीयाध्यायेन सप्तपादात्म-**

---

दशाध्याय-(पाद-)स्य निरुक्तत्वमेव ( न तु परिशिष्टत्वम् )। ऊर्ध्वमार्गगतिनिरू-पणरूप-( सप्तपाद्याश्चतुर्दशाध्यायान्त- )प्रकरणस्य परिशिष्टभूतस्य तु सर्वथा स्वीकरणमेव संपन्नम् । अपरंच त्रयोदशाध्यायस्य स्वल्पग्रन्थत्वादेकचरणत्वमेव मत्वा ग्रन्थान्तेऽस्य विशेषतः सपादद्वादशाध्यायीत्वं स्वीकरिष्यमाणमपि सामान्यत एवोल्लिखितमुपक्रमे द्वादशाध्यायीति । तदेवमतिस्तुतिप्रकरणस्य स्वल्पत्वादध्याय-रूपत्वाभावा-( दल्पत्वादसत्त्वमुपचर्यत इति न्याया- ) त्सामान्यतो निरुक्तग्रन्थो द्वादशाध्यायीत्येव निर्देश्यः । विशेषतस्तु सपादद्वादशाध्यायीति । एतदेव च सायणस्याप्यभिमतम् ॥ निरुक्तालोचनकृतस्त्वेवमाहुः । "य ऋतुः कालो जायानां य ऋतुः कालो जायानामित्यन्तमेव ( द्वादशाध्यायीग्रन्थो ) यास्कीयं निरुक्तम् । अतिस्तुतिप्रकरणमूर्ध्वमार्गगतिप्रकरणं च न यास्कीयं, समाम्नातानां हि निघण्टु-पदानां व्याख्यानानि ( निर्वचनानि ) तत्प्रसङ्गतो विशेषवक्तव्यानि च द्वादशाध्याया-त्मकेनैव ग्रन्थेन वृत्तानीति सिद्धेऽप्युद्देश्ये कथमन्यत्र यास्कमुनेः प्रवृत्तिरेवोदिया-दिति । अतएव च देवराज-सायणदुर्गाचार्येत्येतेषु विद्वत्सु प्राचीनतमेन देवराजेन तयोः ( प्रकरणयोः ) सत्तापि न द्योतिता । ततश्च देवराजयज्वकाले नस्त एव त इमे प्रकरणे । स्त एवेतिचेन्न निरुक्तत्वेन प्रसिद्धे इति सुव्यक्तमेव । ततो दुर्गाचार्य-समयेऽपि ऊर्ध्वमार्गगतेर्दशा तु तथैव । परमतिस्तुतेर्निरुक्तत्वे तु संशय एवासी-त्तदानीन्तनानाम् । अतएव ग्रन्थारम्भकालेऽनाकाङ्क्षमतिस्तुतिप्रकरणमिति मत्वा तस्य निरुक्तत्वपरिहारंमनसि कृत्वैवोक्तं द्वादशाध्यायीत्वं निरुक्तस्य । पश्चाद्ग्रन्थावसान-काले तुष्यतु दुर्जन इति न्यायेन बहुपुस्तकस्थत्वादेव तस्याप्यादरः कृतोऽपि चिर-प्रसिद्धो निरुक्तो द्वादशाध्यायात्मक एवेति संस्मृत्य पुनः संकोचभावेनोक्तं सपाद-द्वादशाध्यायीति । किंच मूलसूत्ररूपनिघण्टुपञ्चाध्याय्या सह सपादसप्तदशाध्यायीति नेत्येव वृत्तिकृन्मतमभिव्यक्तम् ॥ इति ॥ यत्तु तेन ( निरुक्तालोचनकृता ) सायणस्य दुर्गाचार्यतोऽप्यर्वाचीनत्वमभ्युपेत्य यत्किंचिदुक्तं तत्तस्य दुर्गवृत्तेः सम्य-गनवलोकविजृम्भितमिति मे प्रतिभाति । सायणप्रमोल्लेखस्य वृत्तिकृता ( दुर्गेण ) ( निरु० १-३-५ ) "जीवनायक"मिति ( ऋ० सं० ८-८-१९-१ ) मन्त्रशेषव्या-ख्याने कृतत्वात् ॥ एतदपि न मृष्यामः यदेतत्परिशिष्टं यास्ककृतं नेति । परिशिष्ट-

1. यत्तु सायणभाष्ये "द्वासुपर्णा ( ऋ० सं० २-२-१७-५ )" इति मन्त्रव्याख्या-याम् "अत्र द्वौद्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ" इत्यादि ( निरु० १४-४-२ ) निरु-क्तगतमस्य व्याख्यानमनुसंधेयमि"ति वचनं तट्टिप्पनीटीपितमाधुनिकमेव लेखकप्रमाद-पतितमिति युक्तमुत्पश्यामः ॥ निरुक्तकारोक्त्या निरुक्तमित्येवं व्यपदिष्टं स्यात् । यथा जर्भरी तुर्फरीतु इत्येतद्व्याख्यानं परिशिष्टोक्तं-निरुक्तकारोक्त्या ऋग्भाष्यभूमिकायां तेनैव ( सायणेन ) उक्तम् ॥

**केन शिष्यलक्षणान्तग्रन्थसंदर्भेण विषयप्रयोजनसंबन्धाधिकारिभेदेन चतुर्विधमनुबन्धं निर्ब्रुवता तत्रभवता भगवता यास्केन मुनिनोपोद्घातोऽस्य निरुक्तशास्त्रस्य दर्शितः । सचातिगहनोऽनल्पमतिकैरपि दुर्विज्ञेयमर्मा नार्वाग्दृशां प्रतिपत्तिसौकर्याय स्यादिति कार्त्स्न्येन व्याख्यातृभिर्व्याख्यातमपि नाधुनिकानां सुकुमारमतीनां व्युत्पित्सूनां प्रवृत्त्यै प्रभवतीति यत्न आस्थितोऽस्माभिरस्य विशदव्याख्याने,**

---

त्वादेव चेदं ससंबन्धिकं निरुक्तमेव कथंचिद्दुर्गोक्त–( १३–१–१ ) दिशा स्वप्रसङ्गिनमाकाङ्क्षतीति प्रसक्तानुप्रसक्त्यास्याध्यायद्वयस्य निरुक्तशेषे पाठः । यत्पुनश्चत्वारिशृङ्गेत्यादि ( ऋ० सं० ३–८–१०–३ ) मन्त्रस्य यास्कादवरजेन महाभाष्यकारेण व्याकरणाध्ययनप्रयोजनान्वाख्यानपरकात्यायनवार्तिकव्याख्यानावसरे परिशिष्टोक्तव्याख्यातोऽन्यथा व्याख्यानं द्वादशाध्यायानामेव यास्कीयत्वसाधकं तेनोक्तं तदस्य सर्वतन्त्रस्वतन्त्रस्य भगवतोऽन्यव्याख्याऽनवलम्बनं न तस्याधुनिकोत्प्रेक्षिततत्त्वशङ्काकलङ्कमाविर्भावयितुमीष्टे । तत्रापरितुष्टेन वाऽन्यथा तेनं व्याख्यातं स्यादिति कृतं यास्कान्यकृतत्वकल्पनया ॥ वस्तुतस्त्वेषां मन्त्राणां व्याख्यानं यथा प्रसङ्गमनेकविधं भवतीति "चत्वारि वाक्परिमिता पदानीति" ( ऋ० सं० २–३–२२–५ ) मन्त्रव्याख्याने "कतमानि तानि चत्वारि पदान्योंकारो महाव्याहृतयश्चेत्यार्षं, नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः । मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति नैरुक्ताः । सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके, पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादा" इत्येवं ( १३–१–९ ) परिशिष्टवचनेनावगम्यते । व्याख्यातश्च चत्वारिशृङ्गेति मन्त्रोऽनेकधानेकसंप्रदायविद्भिरिति नोक्तार्थसाधनमन्यथा व्याख्यानमस्य भाष्यकृदुक्तं भवितुमर्हति । यदपि "बहवोऽपि शब्दा येषामर्था न विज्ञायन्ते जर्भरी–तुर्फरीतु" इत्यादि (२ अ० पा० १ आ० १) महाभाष्यकृद्वचनं, तत्सत्यप्यत्रातिस्तुतिप्रकरणे "जर्भरीत्यस्य भर्तारौ, तुर्फरीतु इत्यस्य हन्तारौ" इत्येवमर्थनिर्देशे, नोक्तार्थसाधकं भवितुमर्हति, न विज्ञायन्त इत्यस्य प्रमादालस्यादिनेत्यादिः । तथाच मीमांसासूत्रे (अ० १–पा० १) जैमिनिः । सतः परमदर्श ( विज्ञा ) नम् १३ इति । तदेतत्सायण इत्थमृग्भाष्यभूमिकायां व्याख्यत् विद्यमानएवार्थः प्रमादालस्यादिभिर्न ज्ञायते । तेषां निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः परिकल्पयितव्यः । तद्यथा जर्भरी तुर्फरीतु–इत्येवमादीन्यश्विनोरभिधानानि, तेषु हि द्विवचनान्तत्वं लक्ष्यते । आश्विनं चेदं सूक्तम् ( यस्मिन् सृण्येव जर्भरी–इति मन्त्रो ( ऋ० सं० ८–६–२ ) वर्तते ) "अश्विनोः कामप्रा" इति दर्शनात् । एतदेवाभिप्रेत्य निरुक्तकारो व्याचष्टे–इत्येवम् । एवं च स्पष्टमिदं सायणेनोक्तं परिशिष्टकारो यास्क एवेति । ततएव वैषां शब्दानामृङ्मन्त्राणां च सव्याख्यं समुद्धरणं महाभाष्ये इत्यपि संभाव्यते "यतोऽक्षरं न क्षरति न क्षीयते वा–" ( १३–१–१२ ) इत्येवं परिशिष्टोक्तार्थस्य प्रत्याहाराह्निकान्ते–अक्षरं न क्षरं विद्यादित्येवं पद्यरूपेणाक्षरपदनिर्वचनलेखदर्शनादित्यलमत्यक्षरक्षरणेन ॥

अनेन परिज्ञातनिरुक्तोपोद्घातस्य च ग्रन्थमर्मान्वाख्यानशैली सुखं परिशीलिता स्यात्तथाचोत्तरग्रन्थसंलापनं प्राचीनव्याख्याभिरपि ऋज्वर्थाख्यादिभिः सुखमेव संपत्स्यत इति न तत्र पिष्टपेषणावकाशोऽस्ति ॥ तदेतां सप्तपदिकां यास्कनिरुक्त-लघुविवृतिमष्टनवत्यधि-

१ विशदव्याख्यानेन, निरुक्तसप्तपदीव्याख्या–लघुविवृति–नामकेन ॥

२ अस्यैतन्निरुक्तकर्तृत्वे ऐतिह्यम् ( प्रवाद ) एव गमकम् । यतो ह्येतस्य ग्रन्थस्यारम्भे मध्येऽन्ते वा न क्वचिदपि तथाप्रत्यायकं वाक्यादिकमस्ति । नास्ति च मन्वादाविव कथाप्रसङ्गोऽपि ग्रन्थकृन्नामावगमकः । परमस्त्येषः प्रवादः । एतन्निरुक्तं यास्ककृतम् । एतन्मूलसूत्रं पञ्चाध्याय्यात्मको निघण्टुस्तु ब्राह्मणग्रन्थादपि किमुत निरुक्तात्प्राक् महर्षिणा काश्यपेन समाम्नात इति । तदानीन्तनस्यैव कश्यपस्य प्रजापतित्वश्रवणात् निघण्टूत्पत्तिज्ञापकस्य यास्कानूक्तवचनस्यापि तत्रैव तात्पर्यावबोधाच्च । तथाच यास्कानूक्तं पुराकल्पश्रुतवचनम् । "साक्षात्कृतधर्माण ऋषयो बभूवुः ( मन्त्रकाले मन्त्रद्रष्टारः ) तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्यः ( शाखाप्रवक्तृभ्यः ) उपदेशेन मन्त्रान्संप्रादुः । उपदेशाय ग्लायन्तोऽवरे (निघण्टु–ब्राह्मण–वेदाङ्गकाराः) बिल्मग्रहणायेमं ग्रन्थं ( निघण्टुं ) समाम्नासिषुः । वेदं च ( ब्राह्मणं च ) वेदाङ्गानि च" ( निरु० १–६–५ ) एतस्माच्च समासत इमानि पञ्च ज्ञायन्ते । पुराकल्पेऽपि मन्त्राणामुत्पत्तिरनिर्णीतैव । कदाकस्मादभवन्निमे मन्त्रा इति । परं–धीमत्पुरुषकृतत्वं, बहुपुरुषकृतत्वं च बहूनां मन्त्राणां वैशेषिक–न्याय–सांख्य–पातञ्जल-दर्शनानां निरुक्तस्य चास्य[3] समालोचनादवगम्यते । ते चर्षयोऽनद्ययुगीया आधिकारिकतन्नामभाजो वा मनुष्या एव यैर्दृष्ट आम्नातो वायं मन्त्रभाग इति मीमां-

1. मङ्गलाचरणे ( देवताप्रणामादौ ) ग्रन्थसमाप्तौ वा स्वाख्याख्यापनं ग्रन्थकृच्छैलीपरिशीलितमिह नास्त्येव । नापि मध्ये प्रकरणसमाप्तावपि । इति यास्कीये० इत्येवम् ॥

2. उत्पत्तिरिह निघण्टुसमाख्यायाः । समाहृतपदानां तु निगमसिद्धानामनादित्वमेवेत्यस्य समाम्नायत्वोपपत्तिः "सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव यथायथापन्नास्ता गौर्गोधर्मा" इत्येवं दुर्गाचार्येण कृता ॥ अस्यार्थो व्याख्यारम्भे द्रष्टव्यः ॥

3. विश्वामित्रऋषिर्नदीस्तुष्टाव गाथा भवतेति, ऋषिपुत्र्या विलपितं वेदयन्ते, गृत्समदमर्थमभ्युत्थितं कपिञ्जलोऽभिववाशे तदभिधायिन्येषर्ग्भवतीत्येवमादिषु यास्कवचनेषु तत्तन्मन्त्राणामृषिकृतत्वं सुव्यक्तमुपलभ्यते । ब्राह्मणग्रन्थेष्वपि "सर्पऋषिर्मन्त्रकृत् ( ऐ० ब्रा० ६–१–१ )" इत्यादिषु स्पष्टमेवैतत् ॥

4. आम्नानमभ्यासः म्ना अभ्यासे ( भ्वा० प० ) प्रवचनं वाम्नानं तत्र ( मीमांसकेषु ) बादरायणीयैः "शास्त्रयोनित्वात् ( १–१–३ )" इति सूत्रेणर्ग्वेदादिशास्त्रकारणत्वं ब्रह्मण एव विवर्ताधिष्ठानभूतस्योरीकृतम् । जैमिनीयैस्तु "वेदाँश्चैके सन्निकर्षं पुरुषाख्या" "अनित्यदर्शनाच्च" त्येवं पुरुषकृतत्वमाक्षिप्य "उक्तंतु शब्दपूर्वत्वम् आख्या प्रवचना–" दित्यादिनाऽकृतकत्वमेव वेदानां व्यवस्थापितम् ॥ ( जै० सू० १–१–२७+३२ ) एतत्तत्त्वं शास्त्रदीपिकादौ द्रष्टव्यम् ॥

**काष्टादशशततमे खीष्टशकेऽधिवारणावते वेदोज्जीविनीसमाख्यसंस्कृतपाठशालां प्रधानाध्यापकतयाधितिष्ठद्भिरस्माभिर्निर्मातुं कृतसंविदामप्यन्तरायतिरस्कृतैर्नापारि पूरयितुम् ।**

---

सकाः प्राहुः । अतएव चैषामार्षत्वमिति प्रथमम् ॥ १ ॥ पूर्वं मन्त्रा विप्रकीर्णा एव स्थितास्ततो ग्रन्थीभूतानामतिमहद्रूपाणामेषामध्ययनाध्यापनतः शाखाः समुद्भूताः । ततः सर्वशाखागतानां नैघण्टुकादिपदानां सुखबोधार्थं निघण्टुनामको ग्रन्थः समाम्नातः । ततस्तन्मात्रेण मन्त्रार्थज्ञानेऽकृतकृत्यतां संलक्ष्य मन्त्रभागीयदुरवबोधपदादीनां तात्पर्यादिवेदनाय ब्राह्मणग्रन्थाः समाम्नाताः । ततउत्तरं ब्राह्मणग्रन्थैरपि मन्त्रार्थबोधो न पर्याप्त इति निरुक्तादीन्यङ्गानि समाम्नातानीति द्वितीयम्² ॥ २ ॥ यथाचेह मन्त्राणां पृथक्श्रुतेर्वेदशब्देन मन्त्रातिरिक्तानां ब्राह्मणानां बोध उपलभ्यते तथैव वेदाङ्गानां पृथक्श्रवणाद्ब्राह्मणेष्वपि वेदाङ्गेतरवाक्यानामेव ग्रहणीयतेति तृतीयम्॥३॥ निरुक्तादिवेदाङ्गानां सर्वेषामेव षण्णां बीजादिरूपतया एतन्निरुक्ततोऽपि प्रागस्तित्वमिति तुरीयम् ॥ ४ ॥ मन्त्राणामर्थज्ञानसौकर्यायैव यथाम्नानं निघण्टोः, यथाच वेदाङ्गानां निरुक्तादीनां, तथैव तदानीमपि स्वीकृतमासीद्वेद इति प्रसिद्धानां ब्राह्मणानां च, ततः कालभूयस्त्वानुसारत एव ब्राह्मणानां मन्त्रसमत्वं जातमिति पञ्चमम् ॥ ५ ॥ सर्वं चैतन्निरुक्तालोचनकृन्मतमनुसृत्याभिहितम् । परमृषयस्त आधिकारिकसृष्टिविधौ तत्तन्नामभाजोऽनियतास्तत्तत्कल्पे सृष्टिकाले मन्त्रद्रष्टारः सुप्तप्रबुद्धन्यायेन पूर्वकल्पाधीतमन्त्रान्स्मृतवन्तः समाधिबलेनार्थतो दृष्टवन्तश्च । तत्रान्तर्यामितया बुद्धिप्रवर्त्तकत्वेनेश्वरः कारणमिति शास्त्रयोनित्वं तस्य बुद्धिवृत्ति-

---

1 अत्र—पौराणिकाः समष्टिभूतस्यातिमहतो वेदसुरद्रुमस्याल्पायुषो जनाञ्जनिष्यमाणानक्षीणेन तपोविज्ञानेनावेक्ष्य तदनुजिघृक्षया तत्रभवता भगवता वेदव्यासेन ( कृष्णद्वैपायनेन ) व्यसनात् (शाखाप्रशाखारूपेण विभागकरणात्) शाखासमुद्भवं मन्वते । अतएवास्य वेदव्याससमाख्योपपत्तिरिति तेषामभिमतिः । तत्र शाखाभेदः पतञ्जलिना ११३१ दर्शितो महाभाष्ये "चत्वारो वेदाः साङ्गाः सरहस्या एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं, नवधाथर्वणो वेद" इत्येवम् ॥ परमेवमभ्युपगते शाखाप्रणयनस्य वेदव्यासपरभवत्वं केन निराक्रियेत । प्रतिकल्पं द्वापरान्ते वेदव्यासप्रादुर्भावं मत्वा कल्पपरिवृत्तेरनादिपरम्परापतितत्वाद्धाता यथापूर्वमकल्पयदिति न्यायेन संभवत्यनादिपारम्परिकत्वं शाखाप्रणायनस्येति स्यात्तेषां (पौराणिकानां) स्वभिमतिः ॥ परमेतदपि अविज्ञातकल्पनियमं नानादिसिद्धत्वमस्यापोहति ॥

2 एतादृशक्रमोत्पत्तिज्ञाने चोपक्रमोक्ततादृशक्रमश्रुतिरेव मानम् । किंच यतोऽत्र "मन्त्रान् संप्रादुरिति" कथनानन्तरं पुनरुक्तं "वेदंचे"ति, अतो ज्ञायते नेह वेदशब्देन मन्त्राणां बोधोऽपितु तदतिरिक्तभागानां ब्राह्मणानामेव । वेदशब्देन ब्राह्मणग्रन्थमात्राणां ग्रहणाच्च वेदाङ्गत्वं न विलीयते निरुक्तादीनां । यदर्थं हि प्रवृत्ता वेदाः ( ब्राह्मणग्रन्थाः ) तदर्थमेव चेमानि प्रवृत्तान्यङ्गानीत्येवमेषामङ्गाङ्गिभावोपपत्तेः ॥

**समुपजीवमधदरभङ्गाराजधान्यां विविधविरुदावलीविराजमान-मानोन्नतमहाराजाधिराजद्विजराजमहोग्रप्रतापश्रीमल्लक्ष्मीश्वरसिंह-**

---

प्रवर्तकतयोपपद्यते । यथाहुः "प्रचोदिता येन पुरा सरस्वती"इत्यादि (श्रीमद्भा० स्क० २ अ० ४ श्लो० २२)। "तेने ब्रह्म हृदा य आदिकवये" इत्यादि च। (श्रीम० स्क० १ अ० १ श्लो० १) वस्तुतस्तु–तत्तन्नामकल्पनाऽनादिसिद्धैव सृष्टेरप्यनादित्वादनादि-सृष्टिप्रवाहे च परिवर्तमानानामर्थानां नित्यविज्ञानरूपे ब्रह्मणि (वेदे) उपन्यासो न विरुध्यते। अतीतानागतार्थभेदोऽनित्यज्ञानेष्वेवेति वेदा अनादिसृष्टावनादय एवेति जैमिनीयानां मतमवदातम् । तदेतद्भट्टवार्तिके सुव्यक्तं द्रष्टव्यम् ॥

एतदेव चानुसृतं सायणाचार्यदेवराजयज्वदुर्गाचार्यादिभिः ॥

"अथात्र महाभारतीये मोक्षधर्मपर्वणि शिपिविष्टनामनिर्वचनप्रसङ्गे ये त्रयः श्लोकाः ( ३४२ अ० ६९–७०–७१ श्लोक० ) दृश्यन्ते तैश्च ज्ञायते यास्ककृतमे-वैतन्निरुक्तम् । तथाहि—

"शिपिविष्टेतिचाख्यायां हीनरोमा च योऽभवेत् ।
तेनाविष्टं तु यत्किंचिच्छिपिविष्टेति च स्मृतः ॥
यास्को मामृषिरव्यग्रोऽनेकयज्ञेषु गीतवान् ।
शिपिविष्ट इति ह्यस्माद्गुह्यनामधरो ह्यहम् ॥
स्तुत्वा मां शिपिविष्टेति यास्कऋषिरुदारधीः ।
मत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान् ॥" इति ॥

अस्त्येव ह्यत्र निघण्टुभाष्ये (यास्कीये) शिपिविष्टनिर्वचनं च (निरु० ५–२–३)। तत्रैव किंचिदुत्तरं द्वाभ्यां श्लोकाभ्यां निघण्टुकर्तृनाम च प्रकटितम् । तथाहि—

"वृषो हि भगवान्धर्मः ख्यातो लोकेषु भारत ।
नैघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम् ॥
कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ॥" इति ॥

अस्त्येव ह्यत्र निघण्टौ दैवतकाण्डे द्युस्थानदेवताख्याने वृषाकपिरिति पदपाठश्च" (५–६) इत्येवं केषांचिद्वचनमुपलभ्यमानमहाभारतपुस्तकेषु प्रदर्शितश्लोकानाम-दर्शनात्संशयितमेव। अस्य कालनिर्णयस्तु निरुक्तालोचनकृद्भिः श्रीसत्यव्रतसामश्रमि-भिरित्थं सिद्धान्तितः । कलेर्द्वादशतमशताब्द्यां खीष्टजन्मतश्चोनविंशशताब्दीतोऽपि प्राक् समभवदयं यास्क इति । सचायं पाणिनिकात्यायनाभ्यां परजन्मा पतञ्जलेश्च पूर्वजन्मेत्यपि तैरेव सोपपत्तिकं तत्र(निरुक्तालोचने)व्यवस्थापितम् । पाणिनिसमयस्तु कलेरष्टमशताब्दीरूपः ततो द्विशताब्दीपरभूतस्तु कात्यायनसमय इत्यपि तैरेव तत्र सुव्यक्तमुक्तम्। परं कलिसमय एवास्ति विवादास्पदम् ॥ अत्र (कलिसमये) तावत्केचिदेवमाहुः। "यदैव भगवद्विष्णोरंशो यातो दिवं द्विज। वसुदेवकुलो-द्भूतस्तदैव कलिरागतः ॥ यस्मिन्कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि। प्रतिपन्नं

**देवदेवानां सदा समरविजयिनां (जी, सी, आइ, ई) पदविभूषितानां ज्येष्ठधर्मपत्न्या लक्ष्मीमूर्त्याः सतीसावित्रीस्वभावाया महानुभावायाः**

कलियुगम्"। अंश ४ अ० २४ श्लो० ३५–४०) इति विष्णुपुराणोक्त्या, "विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवंगतः। तदाविशत्कलिर्लोकं पापे यद्रमते जनः (स्कं० १२ अ० २ श्लो० २९)" इति श्रीमद्भागवतोक्त्या च भारतयुद्धादनन्तरं कलिप्रवृत्तिरिति। केचित्तु "आसन्मघासु मुनयः शासति राज्यं युधिष्ठिरे नृपतौ। षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्ञश्च"तिवाराहीसंहितावचनेन कलेस्त्रिपञ्चाशदधिकषट्शतवर्षानन्तरं युधिष्ठिरराज्यारम्भमाहुर्यतोहि"शाको नवाद्रीन्दुकृशानुयुक्तः कलेर्भवत्यब्दगणो व्यतीत" इति दैवज्ञबान्धवकृद्भिर्हरपतिठक्कुरैरप्यभ्यधायि। परमेतत्सर्वमविचारितरमणीयम्। एवं हि विज्ञायते अश्विन्यादिनक्षत्रक्रमेण युगारम्भः। तत्रैकस्मिन्नृक्षे शतं समाः सप्तर्षयो निवसन्ति। तेनैव च क्रमेण वर्षगणना पूर्वं प्रवृत्ताऽसीत्" यथाच श्रीमद्भागवते (स्कं० १२ अ० २) सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि। तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि॥ २७॥ तेनैत ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम्। ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः॥ २८॥" इति "यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः। तदानन्दप्रभृतितः कलिर्वृद्धिं गमिष्यति॥ ३२॥" इति च परीक्षितंप्रति शुकवाक्यम्। तथाच विष्णुपुराणेऽपि—"सप्तर्षीणां च यौ पूर्वौ दृश्येते उदितौ दिवि। तयोस्तु मध्यनक्षत्रं दृश्यते यत्समं निशि। तेन सप्तर्षयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम्॥ ते तु पारिक्षिते काले मघास्वासन्द्विजोत्तमेति" (अंश ४ अ० २४ श्लो० ३३।३४)। ते सप्तर्षयः। इत्थंच मघासु सप्तर्षिचारे अश्विन्यादियुगादिमानेन नवशतं समाः कलेर्गता आसन्। एतदभिप्रेत्यैव च "भुजवसुदशमितशाके श्रीमद्बल्लालसेननृपराज्ये। वर्षैकषष्टिभोगा मुनयस्त्वासन्विशाखास्वि"ति श्रीनिवासमिश्रा अद्भुतसागरे प्राहुः। अयं च बल्लालसेनो लक्ष्मणसेनस्य पिता यस्य ल० स० ७४८ मिति राज्यसमयाख्यापिका वर्षप्रवृत्तिरिदानीम्। तत्पितृसमये भुजवसुदशमिता (१०८२) शालिवाहनशकप्रवृत्तिरासीत् तत्र विशाखासु द्वितीयावृत्तौ वर्षैकषष्टिभोगा मुनय (सप्तर्षय) आसन्नित्युक्त्या तदानीं (४२६१) भूरसभुजयुगमितः कलिसमय इति सुव्यक्तम्। तथाचोक्तदिशा शालिवाहनशकारम्भे सप्तर्षयो द्वितीयावृत्तौ वर्षोनाशीतिभोगा मृगशिरस्यासन्निति तदानीं नवाद्रीन्दुकृशानुमितः कलिसमयो भवति। य एव दैवज्ञबान्धवकृतानुमतः। "शाको नवाद्रीन्दुकृशानुयुक्तः कलेर्भवत्यब्दगणो व्यतीत" इति। इत्थंच विक्रमराज्यारम्भे रोहिण्यां द्वितीयावृत्तौ चतुश्चत्वारिंशद्वर्षभोगाः सप्तर्षयो भवन्तीति तदानीं

1 भानुः अवतारः।

2 संवदति चेममुपक्रमोक्तमर्थम्। "आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्। एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम् (१११५) इति। अत्रैवाध्याये २६ श्लोकः। अत्र ज्ञेयं पञ्चदशोत्तरमिति विष्णुपुराणसंमतः पाठस्त्वतिमनोहरः। यतो हि सप्तर्ष्यधिष्ठितमघापूर्वाषाढात्मकः कालो वर्षैकादशशताभ्यन्तर एव नाधिकः।

सद्धर्मबङ्गादरायाः श्री५मल्लक्ष्मीवतीत्यन्वर्थाख्याविभूषिताया धर्मा-

वेदयुगाम्बरगुणै-( ३०४४ )र्मितः कलिसमयो भवतीति सुव्यक्तमुक्तं भवति। यथा-हुर्ज्योतिर्विदाभरणकृतः कालिदासमिश्राः। "वर्षै सिन्धुरदर्शनाम्बरगुणै (३०६८) र्याते कलेः संमिते मासे माधवसंज्ञके च विहितो ग्रन्थक्रियोपक्रमः। ( अ० २२ श्लो० २१ ) इति॥" तर्हि विक्रमराज्याच्चतुर्विंशतितमे वर्षे उक्तग्रन्थः प्राणायि। तथाच चतुर्विंशत्योने तस्मिन् ( ३०६८ ) सएव ( ३०४४ ) कलिसमयः फलति। तस्य च वर्तमानविक्रमसमयेन ( १९६५ ) योगे नवाधिकपञ्चसहस्रमितः कलिसमयो दैवज्ञबान्धवकृदभ्युपेतः फलति। यत्तु तैः ( ज्यो० कृद्भिः ) युधिष्ठिरा-द्वेदयुगाम्बराग्नयः ( ३०४४ ) कलजशविश्वेऽ(१३५)भ्रखखाष्टभूमयः ( १८००० )। ततोऽयुतं लक्षचतुष्टयं क्रमाद्द्वरादृगष्टा(८२१)विति शाकवत्सराः ॥ १ ॥ इति तत्र ( अ० १० ) उक्तं तद्युधिष्ठिरात्कलिप्रवृत्तिभ्रममूलकमिति द्रष्टव्यम्। यैरपि हि युधिष्ठिरात्कलिप्रवृत्तिरुक्ता तैरपि तदानीं ( युधिष्ठिरराज्यकाले ) मघासु सप्तर्षय आसन्नित्यभ्युपेतव्यमेव। अनुपदोक्तश्रीमद्भागवत–विष्णुपुराणवाराहीसंहितादिवचनेभ्यः स्पष्टमेव तदर्थप्रतीतेः। तथाचोपदर्शितमघारोहिण्योरन्तराले युगवेदमहीभुजा(२१४४)त्मकएव कलिसमयः युधिष्ठिरविक्रमयोरन्तरे संभवति न तु वेदयुगाम्बराग्निरूपः। संभवति च सोऽश्विन्यादियुगादिमानेनेति स्थितमेतद्युधिष्ठिरराज्यतः पूर्वं नवशतवर्षात्मको गतः कलिसमय इति। तथाच कलिमुपक्रम्य स्कान्दे भविष्यवचनम्—

"ततोऽपि द्विसहस्रेषु दशाधिकशतत्रये।
भविष्यं नन्दराज्यं च चाणक्यो यान्हनिष्यती"ति॥

अस्य—ततो द्वापरानन्तरम्—द्विसहस्रेषु वर्षेषु कलेर्गतेषु सत्सु दशाधिकशतत्रये (३१०) तावद्वर्षात्मके कलौ नन्दानां तन्नाम्नां नवानां राज्ञां राज्यं भविष्यं यान्कतिपयान्नन्दान् चाणक्यो हनिष्यतीत्येवार्थः। तथाच विष्णुपुराणम्। "यावत्परिक्षितो जन्म यावन्नन्दाभिषेचनम्। एतद्वर्षसहस्रं तु ज्ञेयं पञ्चदशोत्तरम्॥ ( अं० ४

1 तेनहि "युधिष्ठिरो विक्रमशालिवाहनौ नराधिनाथो विजयाभिनन्दनः। इमेऽनु नागार्जुनमेदिनीविभुर्बली क्रमात्षट्शककारकाः कलौ"वित्युपक्रम्य "युधिष्ठिरादि"त्ययं श्लोको भविष्यत्कलिसमयेऽभ्यूहितः। परं तेन तदानीं ( विक्रमसमये ) सप्तर्षिचारो न दर्शितः। दर्शितश्च फलतोऽद्भुतसागरकृदुक्तदिशा रोहिण्यां द्वितीयावृत्तौ चतुश्चत्वारिंशद्वर्षभोगेन वेदयुगाम्बराग्निरूपः कलिसमयः। य एव दैवज्ञबान्धवकृद्भिरपि समर्थितः। तथा चोक्तानेकप्रामाणिकग्रन्थविरुद्धत्वाद्भागवतविष्णुपुराणादिवचनविरुद्धत्वाच्चोपदर्शितश्लोकद्वयं तदीयं भ्रान्तिनिबन्धनमेव। अत्र बीजमुपरिष्टादपि व्यक्तीभविष्यति॥

2 यथाऽऽदिजनकस्य निमेः कुलोत्पन्नाः सर्वएव राजानो जनकनाम्ना व्यपदिष्टा एवम् नन्दकुलोत्पन्नानां नवानां राज्ञां नन्दनाम्ना व्यपदेश आसीत्। ततस्तत्कुलं संख्यामाप। अतएव नन्देति नवसंख्यासङ्केत इदानीमपि सुप्रसिद्धोऽस्ति॥

अ० २४ श्लो० ३२ ) इति ॥ एतच्चाश्विन्यां सप्तर्षिचारे कलिप्रवृत्त्यभ्युपगम एव संगच्छते । एतदुत्तरं हि सप्तर्षीणां चेत्यादि पूर्वोक्तवचनं मघासुसप्तर्षिचारे परीक्षितस्थितिबोधकं, "प्रयास्यन्ति यदा चैते पूर्वाषाढां महर्षयः। तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यती"ति च नन्दस्थितिबोधकम् ॥ यत्तु द्विसहस्रेष्विति निर्धारणे सप्तमी द्विसहस्रवर्षमध्ये दशाधिकशतत्रये स्थिते सति ( अर्थादवस्थिकषोडशशतवर्षात्मके कलौ ) इति केषांचिद्व्याख्यानं श्रीमद्भागवतटीकायामन्वितार्थप्रकाशिकायां द्वादशस्कन्धे द्वितीयाध्यायेऽष्टाविंशतितमश्लोकव्याख्याने उक्तवचनमुपक्रम्यानूदितं तत्तत्रैव "यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः। तदा नन्दप्रभृतितः कलिर्वृद्धिं गमिष्यती"त्युत्तरश्लोकविरोधादुपेक्षितमपीत्यलं कदर्थनाति-

1 अत्रोत्तरत्वं व्याख्येयश्रीमद्भागवतवचनापेक्षया द्रष्टव्यम् ॥

2 अलंशब्दार्थस्तु मध्येशब्दयोगे षष्ठयेव युज्यते न सप्तमी । तदेत"देचश्चग्रस्यादेश" इति पा० सूत्रे शब्देन्दुशेखरे तत्वतो द्रष्टव्यम् । अपरश्च । यत्–"शाकः शराम्भोधियुगो-( ४४५ ) नितो हृतो मानं खतर्कै ( ६० ) रयनांशकाः स्मृताः ॥ १८ ॥ इति । नगै-( ७ ) र्नखै ( २० ) स्सन्निहतो द्विधा शकः सखत्रिशक्रोऽ( १४३० ) क्षयमाङ्ग ( ६२५ ) माजितः। गता सतलब्धशकोऽश्रषड्हतोऽ( ६० ) वशेषके स्युः प्रभवादिवत्सराः ॥ १६ ॥ इति च तदीयं प्रथमाध्यायीयं वचनद्वयमाकलय्य विक्रमराज्यात् ६४० वर्षानन्तरं ( ६७८ वर्षे ) शालिवाहनीये ( ५४३ ) शकाब्दे केनापि प्रणीतोयं ( ज्यो० वि० भ० ) ग्रन्थः । सुप्रसिद्धरघुवंशादिमहाकाव्यत्रयकृत्कालिदासनाम्ना प्रथयितुं तथा २ श्लोकाश्चात्रोपनिबद्धाः। नहि तदानीं ( युधिष्ठिरराज्यकालरूपे तदुक्तोक्तग्रन्थसमये ) शालिवाहनशकप्रवृत्तिरासीत् । इति । तदेतत्संभवदुक्तिकत्वे कदर्थनामात्रम् । शकशब्दो हि तदानीं शकानां म्लेच्छजातीयानां राज्ञां राज्यारम्भवत्सरे सुप्रसिद्ध आसीत् । यद्विषयेच "शकं हत्वा विको राजे–"त्येवमस्ति लौकिकानामाभाणकः सुप्रसिद्धतमः। तथाच विक्रमार्कमुपक्रम्य ज्योतिर्विदाभरणे द्वाविंशाध्याये—

"येनास्मिन्वसुधातले शकगणान्सर्वा दिशः सङ्गरे ।
हत्वा पञ्चनव ( ९५ ) प्रमान्कलियुगे शाकप्रवृत्तिः कृता ॥" इति ।
अपरंच "यो रूमदेशाधिपतिं शकेश्वरं जित्वा गृहीत्वोज्जयिनीं महाहवे ।
आनीय संभ्राम्य मुमोच तंत्वहो स विक्रमार्कः समसह्यविक्रमः ॥" इति ।

सचायं शकवत्सरः ( शककालः ) वसुभूबाण(५१८)मित एव विक्रमार्कराज्यारम्भे ( तत्संवत्सरदिनप्रवृत्तिपर्यन्तम् ) आसीदिति बृहत्संहिता ( वाराहीसंहिता ) वचनादवगम्यते। तथाच संहितावचनम्—

"आसन्मघासु मुनयः शासति राज्यं युधिष्ठिरे नृपतौ ।
षड्द्विकपञ्चद्वि ( २५२६ ) युतः शककालस्तस्य राज्ञश्च ॥" इति ।

अस्यार्थः । योऽयं शकानां राज्ञां कालः ( इदानीं सुप्रसिद्धः ) स यदि षड्विंशदधिकपञ्चविंशतिशतेन युक्तः क्रियते तदा तस्य राज्ञो युधिष्ठिरस्यापि कालो ज्ञायत इति । तथा-

धिकारि ( दानाध्यक्ष- )पदवीमनुसंदधद्भिश्चिरसेवकैर्वंशपरम्परातोऽस्य खण्डवलाकुलस्य, यत्र च—

शयेन ॥ श्रीकृष्णस्य दिविप्रस्थानसमनन्तरमेव कलिप्रवृत्तिरिति कथयतां मूलभूतस्य "यदैवे"त्याद्युपक्रमोक्तविष्णुपुराणादिवचनजातस्य त्वयमेवाभिप्राय उन्नीयते ।

---

चायमपि ज्योतिर्विदाभरणकृदिव युधिष्ठिरादेव कलिप्रवृत्तिमभ्युपैतीति प्रतीयते । युक्तं च तत्तस्य समसमयत्वादेकराजसंसदि नवरत्नेषु परिसंख्यातत्वाच्च । अस्य विक्रमार्ककालिकत्वे मानान्तरमपि ।

"ब्राह्मण्यामभवद्वराहमिहिरो ज्योतिर्विदामग्रणी
राजा भर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत् ।
वैश्यायां हरिचन्द्रवैद्यतिलको जातश्च शङ्कुः कृती
शूद्रायाममरः षडेव शबरस्वामिद्विजस्यात्मजाः ॥ १ ॥"

इति प्रामाणिकश्लोकः। (अयंच शबरो जैमिनीयमीमांसाभाष्यकृत्। यद्विषये इयं सुप्रसिद्धिरस्ति "सहस्रं शाखा ह्यर्थतो वेद शबर" इति। अत्र शाखाः सामवेदीयाः। "सहस्रवर्त्मा सामवेद"इति महाभाष्यादिति केचित्। वस्तुतः सहस्रं ब्राह्मणा आसन्नितिवदसंख्यातानेकवचनोऽत्र सहस्रशब्दस्तथाच चतुर्णां वेदानामेकत्रिंशदधिकैकादशशतमिताः शाखा महाभाष्यपरिसंख्याता हि निश्चयेनार्थतः शबरो वेदेति तस्य चतुर्वेदत्वाच्चतुर्षु वर्णेषु यथाक्रमं विवाह उपपद्यते इत्यपि कश्चित् ॥) संप्रति चायं शकशब्दो राजकीयनियतसमयाख्यापके वर्षपूगे वर्तते यथा खीष्टशकः शालिवाहनशकः । अयंच प्रचारस्तदानीन्तनैर्ज्योतिर्विदाभरणकृद्भिरेव प्रचारितः। यथाचाहुः "शाकप्रवृत्तिः कृता" "शाकवत्सराः" "षट् शककारकाः कलावि"त्येवम् । परंकिमेभिर्विक्रमार्कहतान् शकान्द्विषद्भिरेव तेषां शकोनपरिसंख्यातोऽथवा विक्रमार्कपर्यन्तं युधिष्ठिरशकमेव वेदयुगाम्बराग्निरूपमुक्त्वा ततो विक्रमशकं ततश्च शालिवाहनविजयाभिनन्दननागार्जुनबलीत्येवं षट् शककारकाः परिसंख्याता द्वात्रिंशदधिकचतुर्लक्षवर्षात्मककलिसमयविज्ञानार्थमिति लक्ष्मणसेनादिशकान्तरवच्छकानामपि तु मुख्यः शक एवोपेक्षित इति बाढं प्रतीमः । परमेतदभ्यूहनं तेषां नोपपद्यत इति मूलेस्य सुव्यक्तमुपपादितमेव । यत्तूक्तसंहितावचनव्याख्यायां भट्टोत्पलैरुद्धृतं—

"कलिद्वापरसन्धौ तु स्थितास्ते पितृदैवतम् ( मघाः ) ।
मुनयो धर्मनिरताः प्रजानां पालने रताः ॥ १ ॥"

इति वृद्धगर्गवचनं तद्यदि समूलं तदा—

"चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम् ।
तस्य तावच्छती सन्ध्या संध्यांशश्च तथाविधः ॥ ६९ ॥
इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ ७० ॥"

इति प्रथमाध्यायस्थमनुवचनाभ्यां दैवमानेन द्वादशसहस्रवर्षात्मके कृतादिचतुर्युगे द्वादशशतवर्षभोग्यस्य कले रात्र्यंशो युगमानानुसारेण लवलेशमितः मानुषं सहस्रवर्षात्मको

**श्रीमान्गोकुलपालनार्चिततरश्रीः सत्यभामादृतः**
**सद्वृन्दावनकौतुकी द्विजपतिप्रीतिं समुद्दीपयन् ।**

यत्पूर्वमेव प्रवृत्तोऽपि कलिर्भगवन्महिम्ना प्रतिरुद्धप्रसरस्तद्गमनप्रतीक्ष एवासीदिति यदैव भगवद्विष्णोरंशो दिवं यातः तदैव कलिरागतः । अर्थाद्ध्रुवम् । यल्लोकः पापे रमते इति । संवदति चामुमर्थं पूर्वोक्तयदैवेत्यादिविष्णुपुराणीयवचनोत्तरश्लोकः । "यावत्स पादपद्माभ्यां पस्पर्शेमां वसुन्धराम् । तावत्पृथ्वीपरिष्वंगे समर्थो नाभवत्कलिः ॥ ३६ ॥ इति ॥ अन्यदपि युधिष्ठिरराज्यादपि पूर्वं कलिस्थितिबोधकम्—

अथ भाद्रपदेमासि कृष्णाष्टम्यां कलौ युगे ।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ॥ १ ॥ इति—

मासमीमांसाधृतब्रह्मपुराणवचनम् । एवंवचना[1]न्तरमपि पुराणान्तरे द्रष्टव्यं सुधीभिरिति ॥

१ श्रीरनन्यसाधारणसंपत् लक्ष्मीश्च । तद्वान् । गवां कुलस्य—गोकुलस्य च पालनेनार्चिततराऽतिपूजिता श्रीः संपत् । ऐश्वर्यं( मीश्वरत्व-)ञ्च यस्य सः । सत्यंच भाच

द्वापरसंन्ध्यांशशेष इत्यभिमत्य द्रष्टव्यम् । वस्तुतस्तु सन्ध्यांशातिक्रमणानन्तरमेव युगान्तरप्रवृत्तिरभ्युपेयाऽन्यथा युगसाङ्कर्याद्द्वादशसहस्रवर्षभोगो मनूक्तश्चतुर्णां युगानां नोपपद्येत । तस्मादुपपन्नमेतद्यत् कलेर्नवशतवर्षभोगानन्तरं मघासु सप्तर्षिचारे युधिष्ठिरराज्यमासीदिति । द्वापरसन्धिस्तु धर्मकृतएव। अयंभावः । "त्रीणि लक्षाणि वर्षाणां द्विजमानुषसंख्यया । षष्टिं चैव सहस्राणि भविष्यत्येषवै कलिः इति" विष्णुपुराणीयवचने । शतानि तानि दिव्यानि सप्त पञ्च ( १२ ) च संख्ययेति तदुत्तरवचनानुसारेण पूर्वोक्तमनुवचनेन च सन्ध्यांशाभ्यां सहेति योज्यं तथा च द्वासप्ततिसहस्रवर्षात्मकमनुष्यकालरूपसन्ध्यांशेन सह षष्ट्यधिकलक्षत्रयस्य योगे (४३२०००) द्वात्रिंशत्सहस्राधिकचतुर्लक्षवर्षभोग्यस्य कलेः प्रथमसहस्राब्द्यां सद्यो जातरूपतयाऽप्रकटधर्मत्वात्कृष्णावतारपर्यन्तं प्रतिरुद्धप्रसरत्वाच्चेति प्रागवोचाम । यदपि"द्वापरे समनुप्राप्ते तृतीये युगपर्यये । जातः पराशराद्योगी वासव्यां कलया हरेः" । इति वचनं व्यासोत्पत्तिविषयं तदपि धर्मकृतमेव कलावपि द्वापरे समनुप्राप्ते समनुगते भगवत्प्रादुर्भावमहिम्ना ततः पूर्वमपि द्वापरधर्मस्यैव सुचिरानुवृत्तस्य वर्त्तमानत्वादेवमन्यत्राप्यूह्यम् । केचिदेवंविधवचनानां युगान्तरविषयतया समादधते इत्यलं पल्लवितेन ॥

1 यथा च हरिवंशे श्रीमद्भागवते च कालयवनवधायाद्रिगुहामुपसंक्रान्तेन श्रीकृष्णेन स्वपीताम्बरं चिरसुप्ते मान्धातृतनये मुचुकुन्दे राजनि निक्षिप्य ( तेन तमाच्छाद्य ) निलीनेन चिरकुपितकालयवनपदाऽभिहतिप्रबुद्धेन तेन देवलब्धवरेण राज्ञा निजनेत्राग्निमरीच्या तस्मिन्कालयवने भस्मीकृते सति भगवताभिष्टुतो राजा परस्परपरिचयान्ते पुना राज्यपरिग्रहाय गुहातो निर्गमितः क्षुल्लकान्मनुजान्समन्ततो विचरतोऽवलोक्य क इम इति भगवन्तं पृष्टवान् । सच विहस्यायं कलिसमय इति बोधितवान्तदात्व एव स विमनास्तपस एव कृतक्षणो विचक्षणस्ततएव निववृते"नायमस्माकं राज्यसमय"इतिवदन् । तथाच भारतयुद्धानन्तरं कलिप्रवृत्तिं वदद्भिः सन्तोष्टव्यमित्यलं पल्लवितेन ।

धुन्वञ्जिह्मगचित्तमञ्चितबलो वंशं वहन्नुज्ज्वलम्
कुर्वन्नर्जुनकीर्तिमुद्धृतधरो लक्ष्मीश्वरोऽराजत ॥ १ ॥
यस्याज्ञानतिवर्तिनो हि मिथिलोपान्तेऽपि भूमीश्वराः
सद्भावं गमिताः परे क्षितिभुजो मन्त्रप्रतीक्षा भृशम् ।
सम्राट् संसदि संविभावितमतौ प्रौढिं परामीयुषो
वाचोयुक्तिपटोरदभ्रकरुणागारस्य नैष्टापरः ॥ २ ॥
तस्याशेषगुणाकरस्य मिथिलाधीशस्य सर्वेश्वरी-
पत्पद्माहितसन्मतेरवरजः श्री५माश्रमेशाभिधः ।
नाम्नैवाजनि भेदभाग्वसुमती विख्यातसत्कीर्तिमान्
शास्तीमां मिथिलामगाधमतिमान्सद्धर्मबद्धादरः ॥ ३ ॥

संप्रवर्तमाने चात्र नवाधिकैकोनविंशतिशततमे खीष्टशके उक्त-श्री५मत्याःसमनुकम्पया सभाष्याणि ऋगादिवेदपुस्तकानि निरुक्त-पुस्तके चासाद्य समाकलय्य च तत्तन्मन्त्रार्थान्द्रष्टव्यार्थानन्यानपि प्रमाणयितव्यान्समापीदं प्रस्तुतं कार्यम् । ततश्च तच्चरणानुकम्पयै-वार्थसाहाय्यमप्यासाद्य मुद्रापयितुं प्रस्तुतेयं–सप्तपदिका–यास्कनि-रुक्तलघुविवृतिः । तामेतामवधानेनाकलयितुमनुगृह्णन्तु सहृदयवरा विपश्चितो येनात्मनः सफलोद्योगान्मन्यामहे । दुरवगाहश्चायं वेदम-माख्यापको निरुक्तग्रन्थः । यतो हि नह्यत्र निर्वचनान्येव प्रदर्श्य यास्कमुनिरात्मनः कृतकृत्यतां मेने, अपितु मन्त्रार्थज्ञानाय यथायथा यतितव्यं तत्सर्वमेवेहोपदिष्टवान् । यथाचात्र ( निरु २-१ ) दिग्दर्श-

---

माच, ताभिः सत्यभामया चाऽऽदृतः । सतां सुधियां वृन्दस्य अवने ( पालने ) सति ( समीचीने ) वृन्दावने च कौतुकी । द्विजपतीनां ब्राह्मणानां ( श्रोत्रियाणां ) द्विजपतेर्गरुडस्य च प्रीतिम् समुद्दीपयन्संवर्धयन् । जिह्मगस्य पिशुनस्य कालियस्य च चित्तं परमर्मबिभित्सां धुन्वन्तिरस्कुर्वन् । अञ्चितं पूजितं बलं सामर्थ्यं यस्य सः । अञ्चितः पूतिहो बलो बलभद्रो(ज्येष्ठत्वात् )येन सः । उज्ज्वलं सर्वदोषरहितं नाना-गुणवत् वंशं खण्डवलाख्यं कुलं वेणुं वा वहन् धारयन् अर्जुनां शुक्लां कीर्तिमर्जु-नस्य वा कीर्तिं कुर्वन् सम्पादयन् । उदधिकं भृता पोषिता धरा येन सः । उद्धृद्धृभृहः धृतोधरो गोवर्द्धनो येनसः । लक्ष्मीश्वरो महाराजो विष्णुश्चेति श्लेषः । अत्र सर्वत्र "धातुसम्बन्धे प्रत्ययाः" ( ३–४–१ पा. ) इति भूतेलटः शताबोध्यः ।

१ अपरोऽन्यो महाराजादिः सम्राट्संसदि तथाभूतस्य यस्यनैष्ट ईशो नाभवत् । यमीशितुमतिवर्त्तितुं नाशकदिति यावत् । अत्र हि "अधीगर्थदयेशांकर्मणी (२–३–६२–पा.)"ति ईशितुः कर्मणि शेषत्वेन विवक्षिते षष्ठी ॥

नेन प्रदर्शयिष्यतेऽपि ॥ तदत्रास्मादृशाल्पज्ञजनसुलभेन मतिदोषेण जनितानि स्खलितानि सुविमृश्य प्रबोधयन्तु विचक्षणवरा येन कृतज्ञताप्रकाशनपुरस्सरं यतेमहि द्वितीयसंस्करणेऽस्या निर्दोषता-संपादनाय । क्षन्तारश्च गुणैकपक्षपातिनो दूषणवाचंयमाः सुधियः शीसकाक्षरयोजकदोषेणास्मदीयदृष्टिदोषेण चोपनता अशुद्धीरिति निश्चिन्वन्तो विरमामो निरर्थकाद्विस्तरादिति निगदति-

विदुषामाश्रवो-

मुकुन्दशर्मा बखशी ।

एषच "निरुक्तलघुविवृति"नामको ग्रन्थोऽस्माभिर्मुम्बापुरवासिने तुकाराम जावजीतिसमाख्याय ससर्वाधिकारं मुद्राप्य प्रकाशयितुमर्पित इति तमन्तरा नान्यस्यैतत्पुनर्मुद्रणेऽधिकार इति विदाङ्कुर्वन्तु विदन्त इति च निगदति ग्रन्थकृत् ।

पं० श्रीमुकुन्दशर्म्मा ।

# निरुक्तम् ।

## सप्तपादी ।

हरिः ॐ ॥ समाम्नायः समाम्नातः स व्याख्यातव्यस्तमिमं समाम्नायं निघण्टव इत्याचक्षते निघण्टवः कस्मान्निगमा इमे भवन्ति च्छन्दोभ्यः समाहृत्य समाहृत्य समाम्नातास्ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवोऽपि वाहननादेव स्युः समाहृता भवन्ति यद्वा समाहृता भवन्ति तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि तद्यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तं मूर्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरित्यद इति सत्त्वानामुपदेशः (१) गौरश्वः पुरुषो हस्तीति भवतीति भावस्यास्ते शेते व्रजति तिष्ठतीतीन्द्रियनित्यं वचनमौदुम्बरायणः—॥ १ ॥

तत्र चतुष्ट्वं नोपपद्यतेऽयुगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः शास्त्रकृतो योगश्च व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके तेषां मनुष्यवद्देवताभिधानं पुरुषविद्यानित्यत्वात्कर्मसंपत्तिर्मन्त्रो वेदे ॥ (२) षड्भावविकारा भवन्तीति वार्ष्यायणिर्जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधत्यस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं वर्धत इति स्वाङ्गाभ्युच्चयं सांयौगिकानां वार्थानां वर्धते विजयेनेति वा वर्धते शरीरेणेति वाऽपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति (३) ॥ २ ॥

अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह ते यथावचनमभ्यूहितव्या न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाक-

---

(१) एवमादिखण्डसूत्रक्रमोऽत्र क्षीरस्वाम्यादिभिर्निरुक्तव्याख्यातृभिर्धृतः ॥

टायनो नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्त्युच्चावचाः पदार्था भवन्तीति गार्ग्यस्तद्य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणम् (४) आ इत्यर्वागर्थे प्रपरेत्येतस्य प्रातिलोम्यमभीत्याभिमुख्यं प्रतीत्येतस्य प्रातिलोम्यमति सु इत्यभिपूजितार्थे निर्दुरित्येतयोः प्रातिलोम्यं न्यवेति विनिग्रहार्थीया उदित्येतयोः प्रातिलोम्यं समित्येकीभावं व्यपेत्येतस्य प्रातिलोम्यमन्विति सादृश्यापरभावमपीति संसर्गमुपेत्युपजनं परीति सर्वतोभावमधीत्युपरिभावमैश्वर्यं वैवमुच्चावचानर्थान्प्राहुस्त उपेक्षितव्याः ॥ ३ ॥ (५) * ॥ इति प्रथमाध्यायस्य प्रथमः पादः ॥*॥१॥

अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्यप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणास्तेषामेते चत्वार उपमार्थे भवन्तीवेति भाषायां चान्वध्यायं चाग्निरिवेन्द्र इवेति नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपाचारस्तस्य येनोपमिमीते (१) चिदित्येषोऽनेककर्माचार्यश्चिदिदं ब्रूयादिति पूजायामाचार्यः (कस्मादाचार्य) आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वादधि चिदित्युपमार्थे कुल्माषांश्चिदाहरेत्यवकुत्सिते कुल्माषाः कुलेषु सीदन्ति नु इत्येषोऽनेककर्मेदं नु करिष्यतीति हेत्वपदेशे कथं नु करिष्यतीत्यनुपृष्टे नन्वेतदकार्षीदिति चाथाप्युपमार्थे भवति (२) ॥ वृ॒क्षस्य॒ नु ते॑ पुरुहूत व॒याः ॥ वृक्षस्येव ते पुरुहूत शाखा वयाः शाखा वेतेर्वातायना भवन्ति शाखाः खशयाः शक्नोतेर्वाथ यस्यागमादर्थपृथक्त्वमह विज्ञायते नत्वौद्देशिकमिव विग्रहेण पृथक्त्वात्सकर्मोपसंग्रहश्चेति समुच्चयार्थे उभाभ्यां संप्रयुज्यतेऽहं च त्वं च वृत्रहन्नित्येतस्मिन्नेवार्थे देवेभ्यश्च पितृभ्य एत्याकारो वेति विचारणार्थे हन्ता॒हं पृ॑थि॒वीमि॒मां नि द॑धानी॒ह वे॒ह वे॑त्यथापि समुच्चयार्थे भवति॥४॥

वायुर्वा त्वामनुर्वा त्वेति (३) । अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण संप्रयुज्येते अयमहेदं करोत्वयमिदमिदं ह करिष्यतीदं न करिष्यतीत्यथाप्युकार एतस्मिन्नेवार्थे उत्तरेण मृषेमे वदन्ति सत्यमु ते वदन्तीत्यथापि पदपूरण इदमु तदुहीत्येषोऽनेककर्मेदं हि करिष्यतीति

हेत्वपदेशे कथं हि करिष्यतीत्यनुपृष्टे कथं हि व्याकरिष्यतीत्यसूयायां किलेति विद्याप्रकर्षे एवं किलेत्यथापि न ननु इत्येताभ्यां संप्रयुज्यतेऽनुपृष्टे न किलैवं ननु किलैवं मेति प्रतिषेधे माकार्षीर्मोहार्षीरिति च खल्विति च खलुकृत्वा खलुकृतमथापि पदपूरण एवं खलु तद्बभूवेति शश्वदिति विचिकित्सार्थीयो भाषायां शश्वदेवमित्यनुपृष्ट एवं शश्वदित्यस्वयं पृष्टे नूनमिति विचिकित्सार्थीयो भाषायामुभयमन्वध्यायं विचिकित्सार्थीयश्च पदपूरणश्चागस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः संप्रदित्सांचकार स इन्द्र एत्य परिदेवयांचक्रे (४) ॥ ५ ॥ * इति प्रथमाध्यायस्य द्वितीयः पादः ॥ * ॥ २ ॥

न नूनमस्तिनो श्वः कस्तद्वेद यदद्भुतम् । अन्यस्यचित्तमभिसंचरेण्यमुताधीतं विनश्यति ॥ न नूनमस्त्यद्यतनं नो एव श्वस्तनमद्यास्मिन्द्यवि द्युरित्यह्नो नामधेयं द्योतत इति सतः श्व उपाशंसनीयः कालो ह्योहीनः कालः ॥ कस्तद्वेद यदद्भुतम् ॥ कस्तद्वेद यदभूतमिदमपीतरदद्भुतमभूतमिवान्यस्य चित्तमभिसंचरेण्यमभिसंचार्यन्यो नानेयश्चित्तं चेततेरुताधीतं विनश्यती (त्यप्याध्यातं विनश्य) त्याध्यातमभिप्रेतमथापि पदपूरणः (१) ॥ ६ ॥

नूनं सा ते प्रतिवरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी । शिक्षा स्तोतृभ्यो मातिधग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ सा ते प्रतिदुग्धां वरं जरित्रे वरो वरयितव्यो भवति जरिता गरिता दक्षिणा मघोनी मघवती मघमिति धननामधेयं मंहतेर्दानकर्मणो दक्षिणा दक्षतेः समर्धयतिकर्मणो व्यृद्धं समर्धयतीत्यपि वा प्रदक्षिणागमनाद्दिशमभिप्रेत्य दिग्घस्तप्रकृतिर्दक्षिणो हस्तो दक्षतेरुत्साहकर्मणो दाशतेर्वा स्याद्दानकर्मणो हस्तो हन्तेः प्राशुर्हनने देहि स्तोतृभ्यः कामान्मास्मानतिदंहीर्मोस्मानतिहाय दा भगो नोऽस्तु बृहद्वदेम स्वे वेदने भगो भजतेर्बृहदिति महतो नामधेयं परिवृढं भवति वीरवन्तः कल्याणवीरा वा वीरो वीरयत्यमित्रान्वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा सीमिति परिग्रहार्थीयो वा पदपूरणो वा । प्रसीमादित्यो असृजत् । प्रासृजदिति वा प्रासृजत्सर्वत इति वा विसीमतः सुरुचो वेन आवरिति

च व्यवृणोत्सर्वत आदित्यः सुरुच आदित्यरश्मयः सुरोचनादपि वा सिमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणं सीम्नः सीमतः सीमातो मर्यादातः सीमा मर्यादा विषीव्यति देशाविति त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तमर्धनामेत्येके (२) ॥ ७ ॥

ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्करीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ॥ इत्यृत्विक्कर्मणां विनियोगमाचष्ट ऋचामेकः पोषमास्ते पुपुष्वान्होतर्गर्चनी गायत्रमेको गायति शक्करीषूद्गाता गायत्रं गायतेः स्तुतिकर्मणः शक्कर्य ऋचः शक्नोतेस्तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्करीणां शक्करीत्वमिति विज्ञायते ब्रह्मैको जातेजाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति ब्रह्मा परिवृढः श्रुततो ब्रह्म परिवृढं सर्वतो यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युरध्वरयुरध्वर्युरध्वरयुनक्त्यध्वरस्य नेताध्वरं कामयत इति वापि वाधीयानेयुरुपबन्धोऽध्वर इति यज्ञनाम ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधो निपात इत्येके तत्कथमनुदात्तप्रकृतिनाम स्याद्दृष्टव्ययं तु भवत्युत त्वं सख्ये स्थिरपीतमाहुरिति द्वितीयायामुतो त्वस्मै तन्वं विसस्र इति चतुर्थ्यामथापि प्रथमाबहुवचने (३) ॥ ८ ॥

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः । आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥ अक्षिमन्तः कर्णवन्तः सखायोऽक्षि चष्टेरनक्तेरित्याग्रायणस्तस्मादेते व्यक्ततरे इव भवत इति ह विज्ञायते कर्णः कृन्ततेर्निकृत्तद्वारो भवत्यृच्छतेरित्याग्रायण ऋच्छन्तीव खे उदगन्तामिति ह विज्ञायते मनसां प्रजवेष्वसमा बभूवुरास्यदघ्ना अपर उपकक्षदघ्ना अपर आस्यमस्यतेरास्यन्दत एनदन्नमिति वा दघ्नं दघ्यतेः स्रवतिकर्मणो दस्यतेर्वा स्याद्विदस्ततरं भवति प्रस्नेया ह्रदा इवैके प्रस्नेया ददृशिरे स्नानार्हा ह्रदो ह्रादतेः शब्दकर्मणो ह्लादतेर्वा स्याच्छीतीभावकर्मणोऽथापि समुच्चयार्थे भवति (४) पर्याया इव त्वदाश्विनमाश्विनं च पर्यायाश्चेत्यथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति ॥ ९ ॥

निष्टूक्कासश्चिदिन्नरो भूरि तोका वृकादिव । बिभ्यस्यन्तो ववाशिरे शिशिरं जीवनायकम् ॥ शिशिरं जीवनाय शिशिरं शृणातेः शम्नातेर्वा । एमेनं सृजता सुते । आसृजतैनं सुते । तमिद्वर्धन्तु नो गिरः ॥ तं वर्धयन्तु नो गिरः स्तुतयो गिरो गृणातेः । अयमु ते समतसि । अयं ते समतसीवोऽपि दृश्यते (५) सुविदुरिव सुविज्ञायेते इवाथापि नेत्येष इदित्येतेन संप्रयुज्यते परिभये ॥ १० ॥

हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् । शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पतामेति नरकं न्यरकं नीचैर्गमनं नास्मिन्नमणं स्थानमल्पमप्यस्तीति वाथापि न चेत्येष इदित्येतेन संप्रयुज्यतेऽनु पृष्टे नचेत्सुरां पिबन्तीति सुरा सुनोतेरेवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः (६) ॥ ११ ॥ * ॥ इति प्रथमाध्यायस्य तृतीयः पादः ॥ * ॥ ३ ॥

इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च न सर्वाणीति गार्ग्यो वैयाकरणानां चैके तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि यथा गौरश्वः पुरुषो हस्तीत्यथ चेत्सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्वं तथा चक्षीरन्यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्याद्यत्किंचित्तृन्द्यात्तृणं तदथापि चेत्सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात्तत्रैवं स्थूणादरशयावासंजनी च स्यात् (१) ॥ १२ ॥

अथापि य एषां न्यायवान्कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्पुरुषं पुरिशय इत्याचक्षीरन्नष्टेत्यश्वन्तर्दनमिति तृणमथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति प्रथनात्पृथिवीत्याहुः क एनामप्रथयिष्यत्किमाधारश्चेत्यथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्धान्त्संचस्कार शाकटायन एतः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं चाथापि स-

त्वपूर्वो भाव इत्याहुरपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति तदेतन्नोपपद्यते (२) ॥ १३ ॥

यथो हिनुवा एतत्तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति यथो एतद्यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्वं तथाचक्षीरन्निति पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजकोजीवनो भूमिज इत्येतेनैवोत्तरः प्रत्युक्तो यथो एतद्यथाचापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका यथा व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति यथो एतन्निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः प्रथनात्पृथिवीत्याहुः क एनामप्रथयिष्यत्किमाधारश्चेत्यथ वैदर्शनेन पृथुरप्रथिता चेदप्यन्यैः (३) अथाप्येवं सर्व एव दृष्टप्रवादा उपालभ्यन्ते यथो एतत्पदेभ्यः पदेतरार्धान्त्संचस्कारेति योऽनन्वितेऽर्थे संचस्कार स तेन गर्ह्यः सैषा पुरुषगर्हा (न शास्त्रगर्हा इति) यथो एतदपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः पूर्वोत्पन्नानां सत्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैकेषां यथा बिल्वादो लम्बचूडक इति बिल्वं भरणाद्वा भेदनाद्वा (५) ॥ १४ ॥ * ॥ इति प्रथमाध्यायस्य चतुर्थः पादः ॥ * ॥ ४ ॥

अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यतेऽर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशस्तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति कौत्सोऽनर्थका हि मन्त्रास्तदेतेनोपेक्षितव्यं नियतवाचो युक्तयो नियतानुपूर्व्या भवन्त्यथापि ब्राह्मणेन रूपसंपन्ना विधीयन्त उरुप्रथस्वेति प्रथयति प्रोहाणीति प्रोहत्यथाप्यनुपपन्नार्था भवन्त्योषधे त्रायस्वैनं स्वधिते मैनं हिंसीरित्याह हिंसन्नथापि विप्रतिषिद्धार्था भवन्ति । एक एव रुद्रोऽवतस्थे न द्वितीयः । असंख्याता सहस्राणि ये रुद्रा अधिभूम्याम् ॥ अशत्रुरिंद्र जज्ञिषे; शतं सेना अजयत्साकमिन्द्र इत्यथापि जानन्तं संप्रेष्यत्यग्नये समिध्यमानायानुब्रूहीत्यथाप्याहादितिः सर्वमित्यदितिर्द्यौरदितिरन्तरि-

क्षमिति तदुपरिष्टाद्व्याख्यास्यामोऽथाप्यविस्पष्टार्था भवन्त्यम्यग्याद्दृश्मिन्जारयायि काणुकेति ॥ १५ ॥

अर्थवन्तः शब्दसामान्यादेतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणं (१) क्रीळन्तौ पुत्रैर्नप्तृभिरिति यथो एतन्नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्तीति लौकिकेष्वप्येतद्यथेन्द्राग्नी पितापुत्राविति यथोएतद्ब्राह्मणेन रूपसंपन्ना विधीयन्त इत्युदितानुवादः स भवति यथो एतदनुपपन्नार्था भवन्तीत्याम्नाय वचनादहिंसा प्रतीयेत यथोऽएतद्विप्रतिषिद्धार्था भवन्तीति लौकिकेष्वप्येतद्यथाऽसपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति यथो एतज्जानन्तं संप्रेष्यतीति जानन्तमभिवादयते जानते मधुपर्कं प्राह यथो एतददितिः सर्वमिति लौकिकेष्वप्येतद्यथा सर्वरसा अनुप्राप्ताः पानीयमिति यथो एतदविस्पष्टार्था भवन्तीति नैषस्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति यथा जानपदीषु विद्यातः पुरु(षविशे)षो भवति पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति (५) ॥ १६ ॥ * ॥ इति प्रथमाध्यायस्य पञ्चमः पादः ॥ * ॥५॥

अथापीदमन्तरेण पदविभागो न विद्यते । अवसाय पद्वते रुद्र मृळेति पद्वदवसं गावः पथ्यदनमवतेर्गत्यर्थस्यासौनामकरणस्तस्मान्नावगृह्णन्त्यवसायाश्वानिति स्यतिरुपसृष्टो विमोचने तस्मादवगृह्णन्ति दूतो निर्ऋत्या इदमाजगामेति पञ्चम्यर्थप्रेक्षा वा षष्ठ्यर्थप्रेक्षा वाः कारान्तं परो निर्ऋत्या आचक्ष्वेति चतुर्थ्यर्थप्रेक्षैकारान्तं परः संनिकर्षः संहिता पदप्रकृतिः संहिता पदप्रकृतीनि सर्वचरणानां पार्षदान्यथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति तदेतेनोपेक्षितव्यं ते चेद्ब्रूयुर्लिङ्गज्ञा अत्र स्म इति । इन्द्रं न त्वा शवसा देवता वायुं पृणन्तीति वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रेऽग्निरिव मन्यो त्विषितः सहस्वेति तथाग्निर्मान्यवे मन्त्रे त्विषितो ज्वलितस्त्विषिरित्यप्यस्य दीप्तिर्नाम भवत्यथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च (१) ॥ १७ ॥

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा । यद्गृहीतमविज्ञातं

निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् । स्थाणुस्तिष्ठतेरर्थोऽर्तेररणस्थो वा (२) ॥ १८ ॥

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वं १ विसस्रे जायेव पत्य उशती सुवासाः ॥ अप्येकः पश्यन्न पश्यति वाचमपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्धमप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते ज्ञानं प्रकाशनमर्थस्याहानया वाचोपमोत्तमया वाचा जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा तस्योत्तरा भूयसे निर्वचनाय (३) ॥ १९ ॥

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु । अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ अप्येकं वाक्सख्ये स्थिरपीतमाहू रममाणं विपीतार्थं देवसख्ये रमणीये स्थान इति वा विज्ञातार्थं यं नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्वप्यधेन्वा ह्येष चरति मायया वाक्प्रतिरूपया नास्मै कामान्दुग्धे वाग्दोह्यान्देवमनुष्यस्थानेषु यो वाचं श्रुतवान्भवत्यफलामपुष्पामित्यफलास्मा अपुष्पा वाग्भवतीति वा किंचित्पुष्पफलेति वार्थं वाचः पुष्पफलमाह याज्ञदैवते पुष्पफले देवताध्यात्मे वा (४) साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्त्संप्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च बिल्मं भिल्मं भासनमिति वै तावन्तः समानकर्माणो धातवो धातुर्दधातेरेतावन्त्यस्य सत्त्वस्य नामधेयान्येतावतामर्थानामिदमभिधानं नैघण्टुकमिदं देवतानाम प्राधान्येनेदमिति तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत् । (५) अश्वं न त्वा वारवन्तम् । अश्वमिव त्वा वालवन्तं वाला दंशनिवारणार्था भवन्ति दंशो दशतेः । मृगो न भीमः कुचरो गिरिष्ठाः । मृग इव भीमः कुचरो गिरिष्ठा मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव कुचर इति चरतिकर्म कुत्सितमथ चेद्देवताभिधानं क्वायं न चरतीति गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान्पर्वतः पर्व

पुनः पृणातेः प्रीणातेर्वार्धमासपर्व देवानस्मिन्प्रीणन्तीति तत्प्रकृतीतरत्संधिसामान्यान्मेघस्थायी मेघोऽपि गिरिरेतस्मादेव तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते तदुपरिष्टाद्व्याख्यास्यामो नैघण्टुकानि नैगमानीहेह (६) ॥ २० ॥ * ॥ इति प्रथमाध्यायस्य षष्ठः पादः ॥ * ॥ ६ ॥

( समाम्नायस्तत्र चतुष्ट्वमतोऽन्येऽथ निपाता वायुर्वात्वा ननूनं नूनं सा त ऋचां त्वोक्षण्वन्तो निष्टत्क्रासो हविर्भिरितीमान्यथापि यो यथो हिन्वथापीदमर्थवन्तोऽथापीदं स्थाणुरयमुत त्वः पश्यन्नुत त्वं सख्ये विंशतिः ) ॥ इति निरुक्तपूर्वषट्के प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

अथ निर्वचनं तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयादथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्नत्वेव न निर्ब्रूयान्न संस्कारमाद्रियेत विशयवत्यो हि वृत्तयो भवन्ति यथार्थं विभक्तीः संनमयेत्प्रत्तमवत्तमिति धात्वादी एव शिष्येते (१) अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीत्यथाप्यन्तलोपो भवति गत्वा गतमित्यथाप्युपधालोपो भवति जग्मतुर्जग्मुरित्यथाप्युपधाविकारो भवति राजा दण्डीत्यथापि वर्णलोपो भवति तत्त्वा यामीत्यथापि द्विवर्णलोपस्तृच इत्यथाप्यादिविपर्ययो भवति ज्योतिर्घनो बिन्दुर्वाट्य इत्यथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकतास्तर्कित्यथाप्यन्तव्यापत्तिर्भवति (२) ॥ १ ॥

ओघो मेघो नाधो गाधो वधूर्मध्वित्यथापि वर्णोपजन आस्थद्वारो भरूजेति तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातुभवति तद्द्विप्रकृतीनां स्थानमिति प्रदिशन्ति तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत्तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारुमित्यथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते दमूनाः क्षेत्रसाधा इत्य-

थापि नैगमेभ्यो भाषिका उष्णं घृतमित्यथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु (३) शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते कम्बोजाः कम्बलभोजाः कमनीयभोजा वा कम्बलः कमनीयो भवति विकारमस्यार्येषु भाषन्ते शव इति दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येष्वेवमेकपदानि निर्ब्रूयादथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयाद्दण्ड्यः पुरुषो (दण्डपुरुषो) दण्डमर्हतीति वा दण्डेन संपद्यत इति वा दण्डो ददतेर्धारयतिकर्मणोऽक्रूरो ददते मणिमित्यभिभाषन्ते दमनादित्यौपमन्यवो दण्डमस्याकर्षतेति गर्हायां (४) कक्ष्या रज्जुरश्वस्य कक्षं सेवते कक्षो गाहतेः क्स इति नामकरणः ख्यातेर्वानर्थकोऽभ्यासः किमस्मिन्ख्यानमिति कषतेर्वा तत्सामान्यान्मनुष्यकक्षो बाहुमूलसामान्यादश्वस्य ॥ २ ॥

राज्ञः पुरुषो राजपुरुषो राजा राजतेः पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य । यस्मा॒त्परं॒ नाप॑र॒मस्ति॒ किं॑चि॒द्यस्मा॒न्नाणी॑यो॒ न ज्यायो॑ऽस्ति॒ किञ्चि॑त् । वृ॒क्षइ॑व स्त॒ब्धो दि॒वि ति॑ष्ठ॒त्येक॒स्तेने॒दं पू॒र्णं पुरु॑षेण॒ सर्व॑मित्यपि निगमो भवति (५) विश्वकद्राकर्षो वीति च कद्र इति श्वगतौ भाष्यते द्रातीति गतिकुत्सना कद्रातीति द्राति कुत्सना चकद्राति कद्रातीति सतोऽनर्थकोऽभ्यासस्तदस्मिन्नस्तीति विश्वकद्रः । कल्याणवर्णरूपः कल्याणवर्णस्येवास्य रूपं कल्याणं कमनीयं भवति वर्णो वृणोते रूपं रोचतेरेवं तद्धितसमासान्निर्ब्रूयान्नैकपदानि निर्ब्रूयान्नावैयाकरणाय नानुपसन्नायाऽनिदंविदे वा नित्यं ह्यविज्ञातुर्विज्ञानेऽसूयोपसन्नाय तु निर्ब्रूयाद्यो वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा (६) ॥ ३ ॥

वि॒द्या ह॒ वै ब्रा॑ह्म॒णमा॑ज॒गाम॒ गोपा॑य मा॒ शेव॑धि॒ष्टेऽह॒मस्मि । अ॒सू॒य॒का॒या॒नृ॒ज॒वे॒ऽय॒ता॒य॒ न मा॑ ब्रू॒या वी॒र्य॑वती॒ तथा॑ स्याम् । य आ॑तृ॒णत्त्यवि॑तथे॒न कर्णा॑वदुः॒खं कु॒र्वन्न॒मृतं॑ सं॒प्रय॑च्छन् । तं म॑न्ये॒त पि॒तरं॑ मा॒तरं॑ च॒ तस्मै॒ न द्रु॑ह्ये॒त्कत॒मच्च॒नाह॑ । अ॒ध्या॒पि॒ता ये॒ गु॒रुं॑ ना॒द्रि॒यन्ते॒

विप्रा वाचा मनसा कर्मणा वा। यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत्। यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम्। यस्तेन द्रुह्येत्कतमञ्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्म-(न्निधिपाय ब्रह्म)न्निति निधिः शेवधिरिति (७) ॥ ४ ॥ * ॥ इति द्वितीयाध्यायस्य प्रथमः पादः ॥ * ॥ १ ॥ शुभमस्तु ॥



# निरुक्तविवृतिः ।



## प्रथमोऽध्यायः ।

श्रीमदाद्यापदाम्भोजद्वन्द्वं वन्देऽर्थसिद्धये ।
निरुक्तविवृतिं लघ्वीं ब्रुवे दुर्गमतं यथा ॥ १ ॥
श्रीमदाचार्यदुर्गोक्तिर्दुर्गमा विदुषामपि ।
इति व्युत्पित्समानानां प्रवृत्त्यै यतवानहम् ॥ २ ॥
दृष्ट्वानां दुर्गवक्रोक्तिः स्फुटं विज्ञास्यते यथा ।
इति क्वचिद्विस्तरं मे क्षंस्यन्ति गुणगृध्नवः ॥ ३ ॥

अथ तत्रभवान्भगवान्यास्कमुनिरल्पायुषोऽल्पमेधसो जनाञ्जनिष्यमाणानक्षीणेन[1] तपोविज्ञानेनावेक्ष्य तदनुजिघृक्षया साक्षात्कृतधर्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थमुपश्रुत्य श्रुतर्षिभिर्वाच्यार्थसामर्थ्यादभिधेयानुनीय मन्त्रार्थपरिज्ञानाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नातं पञ्चाध्यायीशास्त्रसंग्रहभावेनैकस्मिन्नाम्नाये ग्रन्थीकृतं गवादिदेवपत्न्यन्तं वैदिकशब्दसमुदायं निघण्टुपरनामकं काण्डत्रयविभागेन व्याचिख्यासुः

१. कुतोऽप्यप्रतिहतेन, अनागतार्थदर्शिनेति यावत् ।

२. ऋषिशब्दार्थो वक्ष्यते ऋषिर्दर्शनादिति ( नै० २-३-२ ) तदर्थोऽपि वक्ष्यते ( नै० १-६-५ ) तत्र ये साक्षात्कृतधर्माणस्तेभ्य उपदेशेन श्रुत्वा पश्चाद्ये ऋषयो बभूवुस्ते ऋषिभ्यः श्रुतधर्मत्वाच्छ्रुतर्षय इत्युच्यन्ते ।

३. अथैनां पञ्चाध्यायीमभिप्रेत्य—"सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव यथाऽयथापन्नास्ता गौर्गोधर्मा इति' दुर्गवृत्त्या निघण्टोश्छन्दस्त्वमव्याहतमुक्तं भवति । यथा ( च ) अयथापन्ना अप्रकृतविपन्ना परं समान्यविपन्ना अस्ता यूथपरिभ्रष्टा गौर्गोधर्मा एव नहि तस्या यूथपरिभ्रष्टत्वेन गोत्वं नष्टम् । तथैव छन्दोभ्यः समाहृता एषा पञ्चाध्यायी छन्दएव । नह्यस्याः समाहरणत एव छन्दस्त्वं तिरोबभूवेति हि तद्भावः ॥

४. नैघण्टुकं, नैगमं, दैवतमित्येवम् । एतेषां लक्षणादिकमग्रे(नै० १-६-५-६)स्फुटीभविष्यति । उक्तं चोपक्रमणिकाभाष्यकृद्भिः । "आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा । तृतीयं दैवतं चेति समाम्नायस्त्रिधा स्मृतः ॥ गौराद्यपारपर्यन्तमाद्यं नैघण्टुकं मतम् । जहाद्युल्बमृबीसान्तं नैगमं संप्रचक्षते । अग्न्यादिदेवपत्न्यन्तं दैवतं काण्डमुच्यते ॥ इति ॥ ननु सर्वत्र ग्रन्थादौ

1 तत्राप्युक्तम् "अग्न्यादिदेवीऊर्जाहुत्यन्तः क्षितिगतो गणः । वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः ॥ सूर्यादिदेवपत्न्यन्ता द्युस्थानदेवता इति । गवादिदेवपत्न्यन्तं समाम्नायमधीयते" इति ॥

प्रतिजानीते । **समाम्नायः समाम्नातः स व्याख्यातव्य इति** । अथास्य व्याख्यानम् ॥

णं शिष्टाचारानुमितश्रुतिसंमतं तदत्र यास्कमुनिः किमिति नानुष्ठितवानिति चेन्न । "आशीर्वादनमस्कारवस्तुनिर्देशभेदतः । मङ्गलं त्रिविधं प्रोक्तं ग्रन्थादौ तत्सुखावह"[1] मित्यभियुक्तोक्तरीत्या त्रिविधस्य तस्यैकतमरूपेणात्रापि सत्वान्नह्याशीर्वादनमस्काराभ्यामेव मङ्गलं भवतीति नियमः । येन हि ग्रन्थफलबीजभूतं वस्तु निर्दिश्यते तदपि मङ्गलम् । यथा महाकाव्येषु । प्रकृते च तदेव तृतीयविधमनुसंधेयं धीधनैरित्यलमत्यक्षरक्षरणेन ॥

१. अत्रेदमवधेयम् । शास्त्रारम्भे विषय–प्रयोजन–संबन्धा–ऽधिकारिणो निर्वाचनं प्रेक्षावत्प्रवृत्तिप्रयोजकं, प्रवृत्तौ हि तेषां बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानं जनक- "मिदं मदिष्टसाधन"मिति । तथा कृतिसाध्यताज्ञानमपि "इदं मत्कृतिसाध्य"मिति । तयोश्च विषयविधयेदमिति विषयज्ञानं, इष्टमिति प्रयोजनज्ञानं, साधनं साध्यमित्येवं संबन्धज्ञानं, मदिति चाधिकारिज्ञानं जनकमिति जनकजनकत्वात्प्रयोजकमित्युच्यते । एतच्चतुष्टयानुगतरूपं तु ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वमिदमेव[2] च ग्रन्थारम्भेऽनुबध्यमानरूपत्वादनुबन्धत्वम् । एतन्निर्वाचनमन्तरा शास्त्रमारभ्यमाणं न प्रेक्षावद्भिराद्रियेत[3] इति । तदेतदत्र व्याख्यातव्यनिघण्टुपदव्युत्पादनमुखेन प्रथमाध्यायचतुर्थपादान्तेन ग्रन्थसन्दर्भेण विषयलक्षणमुच्यते । अथापीदमन्तरेणेत्यादिना ( १–५–१ ) तु शास्त्रारम्भप्रयोजनकथनमारप्स्यते । अधिकारिलक्षणं तु नावैयाकरणायेत्यादिना ( २–१–६ ) वक्ष्यते । अनयोः ( प्रयोजनाधिकारिलक्षणयोः ) मध्ये यत्किंचिद्वक्ष्यते तत्प्रयोजनाङ्गतयैवावस्थास्यते । संबन्धस्तु शास्त्रविषययोः प्रतिपाद्यप्रतिपादकभावः । विषयप्रयोजनयोश्च साध्यसाधनभाव इत्येवमनुक्तोऽप्यभ्यूहितुं शक्यत इति स इह मुखतो नोक्त इति ॥

२. व्याख्यानं च, 'पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजनम् । आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृत' मित्युक्तलक्षणं षट्प्रकारकम् ॥

---

1 तच्छुभावहमित्यपि पाठः क्वचित् ॥

2 ग्रन्थः शास्त्रं तदेकदेशो वा प्रकरणाख्यापकः । अलौकिकैकप्रयोजनोद्देशेन प्रवृत्तवाक्यसमुदायो हि ग्रन्थः ॥

3 तथाचोक्तम् । विना विषयसंबन्धौ तथैवार्थाधिकारिणौ ।
अव्याख्येयो भवेद्ग्रन्थः स्याद्ग्रन्थे तच्चतुष्टयम् ॥ १ ॥ इति ॥

अत्रोपपत्तिमाह—सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः संबन्धः सप्रयोजनः ॥ २ ॥

सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यताम् ॥ ३ ॥

अनिर्दिष्टफलं सर्वं न प्रेक्षापूर्वकारिभिः ।
शास्त्रमाद्रियते तेन वाच्यमग्रे प्रयोजनम् ॥ ४ ॥

तत्र तावत्सप्तदशावान्तरखण्डवाक्यात्मके प्रथमखण्डसूत्रे—

**समाम्नायः समाम्नातः** ॥ १ ॥ इत्यादिमं वाक्यम्[1] ॥ **अस्यायमर्थः ।**

**सं**—सम्यक्+**आ**—मर्यादया×**म्नायते**ऽभ्यस्यतेऽयमित्यर्थे समाङ्‌पूर्वान्म्नातेरभ्यासार्थकात्कर्मणि अकर्तरिच कारक (३-३-१९) इति घञ्प्रत्ययः । आतोयुगि-(७-३-३३) ति युक् । गवादिर्देवपत्न्यन्तो वैदिकशब्दसमुदायः **समाम्नाय** इत्युच्यते । स च **समाम्नातः** । ऋषिभिः प्राग्भवीयैर्मन्त्रार्थपरिज्ञानायोदाहरणभूतः । पञ्चाध्यायीशास्त्रसङ्ग्रहभावेनैकस्मिन्नाम्नाये निघण्टूपरनामके ग्रन्थीकृत इति[2] ॥ तस्य किमित्यपेक्षायामाह—

**स व्याख्यातव्यः** ॥ २ ॥ **स** योऽसमाम्नातश्छन्दस्येवावस्थितोऽगवादिरन्यैर्वा नैरुक्तैर्यः समाम्नातः स एष उभयलक्षणोऽपि **व्याख्यातव्यः**[3] वि—विभज्य×इमा-

---

१. वाक्यं च 'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता' इत्युक्तलक्षणम् । अत्र सुप्तिङन्तचय इति सुबन्तचयः । तिङन्तचयः सुप्तिङन्तचय इत्यर्थः । तदेतत्त्रिविधमप्यत्र निर्दिष्टमस्ति क्रमेण । इदं च सुबन्तचयात्मकमनन्तरमपि (द्वितीयं) तदेव ॥

२. अतएवास्य समाम्नायत्वं नद्यययुगीयैः कृतस्य ग्रन्थस्य समान्मायत्वमुपपद्यते । वक्ष्यते चाप्यस्यैवं समाम्नायत्वं "अवरेबिल्मग्रहणायेमं ग्रन्थं समाम्नासिषु"रिति ॥ अस्य ग्रन्थीकृत इत्यनेनान्वयः ।

३. अत्र दुर्ग आह—कथमेतद् गम्यते असमाम्नातव्याख्यानमप्यभिप्रेतमिति ? समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति ? उच्यते निर्वचनलक्षणोपदेशात् । निर्वचनप्रसक्तानां च मृगकर्णदक्षिणालक्ष्मीनिघण्टुभद्राधःशब्दप्रभृतीनामेवमाद्यानां निर्वचनोपदेशाद् ज्ञायतेऽसमाम्नातव्याख्यानमप्यत्राभिमतमिति । यत्पुनरेतदुक्तं समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति । अत्रब्रूमः । नहि समाम्नानार्हाणामन्तोऽस्ति । तेषां सर्वेषां समाम्नाने शास्त्रान्त एव न स्यात् । अतश्चाध्ययनश्रवणज्ञानशक्तिहानदोषः प्रसज्येत । शक्यश्च तावल्लक्षणोद्देशोदाहरणभूतनिघण्टुशब्दसमवायेनाधीतवेदेन भाविना तपस्विना लक्षणविनियोगार्षछन्दोदैवतनिदानविदाभियुक्तेनागमवता मन्त्रार्थोऽभ्यूहितुमित्येतावानेव निघण्टुषु शब्दसमुदायः समाम्नातः । तस्मादुपपन्नमसमाम्नातव्याख्यानमपि अत्राभिमतमिति । असमाम्नानं च सर्वेषां शास्त्रातिगौरवभयादिति ॥

शास्त्रस्य च फले ज्ञाते तत्प्राप्याशावशीकृताः ।
प्रेक्षावन्तः प्रवर्तन्ते तेन वाच्यं प्रयोजनम् ॥ ५ ॥

यावत्प्रयोजनेनास्य संबन्धो नाभिधीयते ।
असंबद्धप्रलापित्वाद्भवेत्तावदसङ्गतिः ॥ ६ ॥

तस्माद्व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः ।
शास्त्रावतारसंबन्धो वाच्यो नान्योऽस्ति निष्फलः ॥ ७ ॥ इति ॥

अत्र हेतुप्रयोजनयोर्युगपदाम्नानं हेतुशब्दस्य कारणवचनत्वात्पूर्वं हि कारणं वाच्यं तदेव हि फलभावेन विपरिणमिष्यते । यथात्र "अथापीदमन्तरेणे" त्यादिनोक्त, मिदं त्ववान्तरप्रयोजनं परमप्रयोजनं तु कैवल्यप्राप्तिर्निष्कामकृतयथावत्कर्मद्वारेति वक्ष्यते (१-६) तृतीयखण्डान्ते ॥

न्यत्र नामानि, इमान्याख्यातानि, इमे उपसर्गाः, इमे निपाताः, इदं सामान्यलक्षणं, इदं विशेषलक्षणम्, इमान्येकार्थानि, इमान्यनेकार्थानि, इमान्यवगतसंस्काराणि, इमान्यनवगतसंस्काराणि, इदमभिधानं, इदमभिधेयं, इदमभिधानस्य निर्वचनमित्येवंविधया आ—मर्यादया=परिपाट्या यथा समाम्नात आख्यातव्यो निर्वक्तव्य इत्यर्थः ॥

**तमिमं समाम्नायं निघण्टव इत्याचक्षते ॥ ३ ॥ तं**—पूर्वोक्तरूपम्[1] **इमं**—निरुच्यमानलक्षणं च **समाम्नायं** समाम्नायपदप्रतिपाद्यं **निघण्टव** इति—निघण्टुपदप्रतिपाद्य**माचक्षते**—कथयन्ति । अन्येऽप्याचार्या इति शेषः । निपातेनेतिना कर्मण उक्तत्वान्न द्वितीया । विधेयत्वाच्चासमानवचनता[2] न दोषायेति बोध्यम् ॥ निघण्टुशब्दव्युत्पिपादयिषया पृच्छति—

**निघण्टवः कस्मात्** ॥ ४ ॥ इति ।

निर्विवक्षयोत्तरयति—

**निगमा इमे भवन्ति** ॥ ५ ॥ इति । नि—निश्चयेनाधिकं वा निगूढार्था वा (एते परिज्ञाताः सन्तो) मन्त्रार्थान्**गम**यन्ति बोधयन्तीति निगमा—निगमसंज्ञकाः-सन्तो निघण्टव एव इमे गवादयो भवन्ति ॥

कुतो यत एते—

**छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः ॥ ६ ॥**

**छन्दांसि** मन्त्रास्तेभ्य (उपलक्षितसामर्थ्याः) **समाहृत्य समाहृत्या**भीक्ष्णमेकीकृत्य **समाम्नाता** उक्ता ग्रन्थीकृता इति यावत् । अत इति शेषः ॥

**ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः ॥ ७ ॥**

ये पूर्वमुपदर्शिता[3]**स्ते** उभये अपि निगमनान्मन्त्रार्थनिगमयितृत्वाद्धेतो**र्निगन्तवो** निगमयितारः निश्चयेनार्थावगतिकराः **एव** एते संपन्ना वर्णविपर्ययवर्णव्यापत्त्यादिनिरुक्त[4]—(निर्वचन) लक्षणेनातिपरोक्षतामापादिताः **सन्तो निघण्टव** इत्युच्यन्त, इति **औपमन्यव**[5] आचार्यो मन्यते इति शेषः । त्रिविधा हि शब्दा भवन्ति प्रत्यक्षवृत्तयः परोक्षवृत्तयोऽतिपरोक्षवृत्तयश्च । तत्रोक्तक्रियाः प्रत्यक्षवृत्तयः । अन्तर्लीनक्रियाः परोक्षवृत्तयः । अविज्ञातक्रिया अतिपरोक्षवृत्तयः ॥ तेष्वेव विशिष्य निर्वचनाभ्यु-

---

१. यद्वा तं पूर्वैः समाम्नातमिममत्र (गवादिदेवपत्न्यन्तशब्दसमुदाये) समाम्नातं च ॥

२. या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः । प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे ॥ इति वचनव्यवस्थितौ प्राय:पदोपादानात् ॥

३. अन्यैः समाम्नाता अगवादयः अत्र (गवादिदेवपत्न्यन्ते शब्दसमुदाये) वा समाम्नाताः ॥

४. तथाचोक्तम् । वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ १ ॥ इति ॥
प्रकृते च नि—पूर्वाद्गमेरौणादिकस्तुन्प्रत्ययः । गकारस्थाने घकारस्तकारस्थाने च टकारः पृषोदरादित्वात् ॥

५. उपरतमन्युरुपमन्युस्तस्यापत्यमौपमन्यवः । कीर्तिप्रथनार्थमौपमन्यवग्रहणम् ॥

पायस्तस्मात्परोक्षवृत्तितामापाद्य प्रत्यक्षवृत्तिना शब्देन निर्वक्तव्याः–तद्यथा "निघण्टव" इत्यतिपरोक्षवृत्तिः, "निगन्तव" इति परोक्षवृत्तिः, "निगमयितार" इति प्रत्यक्षवृत्तिः। यस्मान्निगमयितार एते निगन्तव इति निघण्टव इत्युच्यन्ते। एवमन्यत्राप्यूह्यम् ॥ तमेव निघण्टुशब्दमन्यथा निर्वक्ति—

**अपिवा हननादेव स्युः समाहता भवन्ति ॥ ८ ॥**

वाशब्दोऽत्र चार्थे, **अपिचाऽऽहननादेव** निघण्टवः **स्युर्न** तु निगमनात्। कुतो यत इमेऽत्र (एतस्मिन्पञ्चाध्यायीशास्त्रसङ्ग्रहे) **समाहताः** सं–सम्यक् आ–मर्यादया हताः पाठिता **भवन्ति**। तस्मात्समाहननक्रियायोगात्समाहन्तव एव एते संपन्ना उपसर्गव्यत्ययोपसर्गाध्याहारवर्णव्यापत्तिभिरतिपरोक्षवृत्तितामापादिताः सन्तो निघण्टव इत्युच्यन्ते। प्रसिद्धश्च पाठार्थे हन्तेः प्रयोगः। ब्राह्मणे इदमाहवं, सूत्रे इदमाहतमित्यादिषु ॥

प्रकारान्तरेण निर्वक्ति—

**यद्वा समाहता भवन्ति ॥ ९ ॥**

**यदि**त्यव्ययं यस्मादित्यर्थकम्। यस्माद्वा एते **समाहता भवन्ति** छन्दोभ्यस्तस्मात्समाहरणक्रियायोगात्समाहर्तव एव एते संपन्नाः पूर्ववदेवोपसर्गव्यत्ययादिक्रमेणातिपरोक्षवृत्तितामापादिताः सन्तो निघण्टव इत्युच्यते। एवमेष निघण्टुशब्दो गमेर्वैकोपसर्गाद्धन्तिहरतिभ्यां वाद्युपसर्गाभ्यां निरुक्तः। एवमन्यत्रापि रूढशब्दोऽनेकक्रियाभिर्निर्वक्तव्यः। यथोक्तं वार्तिककृता।

यावतामेव धातूनां लिङ्गं रूढिगतं भवेत्।
अर्थश्चाप्यभिधेयस्थस्तावद्भिर्गुणविग्रहः ॥ इति ॥

एतावता ग्रन्थसंदर्भेण समाम्नायो निघण्टव इति समाम्नायशब्दपर्यायप्रसक्तस्य निघण्टुशब्दस्य व्युत्पत्तिरुक्ता नतु निघण्टुशब्दस्यार्थतत्वमवधारितं तदवधारणाय वाक्यमारचयति—

**तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति ॥ १० ॥**

**तत्**—निघण्टुशब्दार्थतत्वम् अवधार्यत इति शेषः। किंपुनस्तत् **यान्येतानि**

१. विद्यमानमपि निगमनमविवक्षितमस्मिन्पक्षे, अनेकक्रियायोगेऽपि हि सति कांचिदेव क्रियामादाय नामधेयप्रतिलम्भो भवति ॥

२. अर्थस्य प्राधान्यादर्थनिर्वचनवशेन शब्दविपरिणामोऽयं दर्शितः। उत्तरत्राप्ययमेव क्रमो द्रष्टव्यः ॥

३. समःस्थाने नीत्येप नियुक्तः दर्शयिष्यति चैत—(उपसर्गव्यत्यय–) निरित्येष समित्यस्य स्थाने इति। आङविद्यमान एवाध्याहृतो मर्यादार्थप्रकाशनाय। हन्तेः पाठार्थे वर्तमानस्यानेकार्थत्वाद्धातूनां, वर्णव्यापत्त्या हकारस्थाने घकारः।

**चत्वारि पदजातानि** या एताश्चतस्रः पदजातयः । पदसामान्यानि (पदगणाः) जातिर्जातं च सामान्यमित्यमरः । लोके वेदे चेति शेषः । तद्भेदान्याह **नामाख्याते चोपसर्गनिपाताश्चेति, तानीमानि** निघण्टुसंज्ञकानि **भवन्ति ।** इमानि चत्वार्येव पदजातानि सन्त्यस्मिञ्छास्त्रे इत्यर्थः ।

तत्र नामाख्यातयोर्निपातोपसर्गनिरपेक्षयोरपि अर्थाभिधायकत्वाद्वाच्यार्थेनार्थवत्त्वाच्च प्राधान्यात्पूर्वमभिधानम् । निपातोपसर्गयोश्च नामाख्यातनिरपेक्षयोरर्थाभावाद्द्योत्यार्थेनैवार्थवत्त्वाच्चाप्राधान्यात्पश्चादभिधानम् । "नामाख्याते" इति समासेनाभिधानमितरेतराकाङ्क्षित्वप्रदर्शनाय । नाम्नः पूर्वनिपातोऽल्पाच्तरत्वात् नामपदवाच्यार्थाश्रयक्रियोपलक्ष्यत्वाच्चाख्यातस्य पश्चान्निपातः । उपसर्गनिपातानामुभयेषामपि नामाख्यातयोरर्थविशेषद्योतकत्वरूपसमानकार्यकारित्वात्सामर्थ्यमिति समासः । उपसर्गाणामाख्यातसहयोगित्वादनन्तरमभिधानम् । परिशेषाणां निपातानां पश्चात् । अपरिमिताश्च निपाता इति ।

**तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति ॥ ११ ॥**

**तत्र**—तस्मिन् लोकवेदप्रसिद्धे पदचतुष्टये (निघण्टुशब्दसमानसंज्ञोपलक्षिते) ये ताव**न्नामाख्याते** तयोस्ताव**देत**ल्लक्षणं प्रदिशन्ति प्र–प्रकर्षेण (इदं नाम्नां लक्षणमिदमाख्यातस्येत्येवं विभज्य-) दिशन्ति उपदिशन्ति । आचार्या इति शेषः । तल्लक्षणं च समाम्नातासमाम्नातोभयसङ्ग्रहायैव । यथोक्तम्—

ऋषयो ह्युपदेशेन नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥ १ ॥ इति ।

तल्लक्षणस्वरूपमाह—

**भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि ॥ १२ ॥**

१ नाम जातिः स्त्रीपुंनपुंसकप्रविभागेन नानासुबन्तपदव्यक्तिगता, एवमाख्यातजातिः कर्तृवचन, भाववचन, कर्मवचन,–प्रविभागेन नानातिङन्तपदव्यक्तिगता । उपसर्गजातिराङादिः । निपातजातिश्चेवादिः । इति व्यक्ततरमुपपादयिष्यते ।

२. उद्देशेनैव चतुर्णामवगतौ कण्ठतश्चत्वारीत्युक्तिः परिसंचष्टे चत्वार्येवेति । यथा—

पञ्च पञ्चनखा भक्ष्याः पञ्च पञ्चनखेतराः ॥
शशकः शल्लकी गोधा कूर्मः खड्गी च पञ्चमः ॥ १ ॥

इत्यादौ पञ्चेत्याद्युक्तिः । पञ्चैवेत्यर्थेन पञ्चातिरिक्तानां पञ्चनखानामभक्ष्यत्वमवगमयति । सेयं परिसंख्याविधिरत्रापद्येव मांसभक्षणप्रसक्तौ द्रष्टव्या, तथैव प्रक्रमात् ॥

३. अजाद्यदन्तस्यापि उपसर्गस्य परप्रयोगोऽयमाख्यातेन यथासंख्यान्वयमनुरुध्य कृतः । दृष्टंच पूर्वनिपातप्रकरणस्यानित्यत्वं समुद्राभ्राद्ध (४–४–११८) इत्यादिषु ।

४. सतिसामर्थ्ये समास इति तेन (सामर्थ्येन) समानकार्यत्वं पूर्वोत्तरपदार्थयोरवगम्यते ॥

**भावो** भावना उत्पादना साच असत्वभूतो धात्वर्थोऽत्र गृह्यते । इयमेव च साध्यत्वेनाभिधीयमाना क्रियेत्युच्यते । यथोक्तं हरिणा—

धात्वर्थो भावना सैवोत्पादना सैव च क्रिया । इति ।
असत्वभूतो भावश्च तिङ्पदैरभिधीयते । इति च ॥
यावत्सिद्धमसिद्धं च साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥ इतिच ॥

स (भावः) **प्रधानं** यत्र (गुणभूतानि चान्यानि कारकाणि) तदिदं भावप्रधा-

१. सत्वशब्दार्थोऽनुपदं वक्ष्यते । सभूतस्तत्वं (सत्त्वत्वं) प्राप्तः सत्वभूतः । भूप्राप्तावात्मनेपदी (चु.) तस्माद्गत्यर्थाकर्मके–(३–४–७२)–त्यादिना कर्त्तरिक्तः ॥ सत्वशब्दोऽत्र भावप्राधानो नलिर्दिष्टः द्व्येकयोर्द्विवचनैकवचने (२–४–५४) इत्यत्र द्व्येकयोरितिवत् । तद्भिन्नोऽसत्वभूतः । तत्वं च लिङ्गाद्यनन्वितत्वम् । यथाचोक्तम्—

क्रियावाचकमाख्यातं लिङ्गतो न विशिष्यते ॥
त्रीनत्र पुरुषान्विद्यात्कालतस्तु विशिष्यते ॥ इति ।

अत्र आद्यादित्वात्सार्वविभक्तिकस्तसिल् तृतीयान्ताभ्यां लिङ्गकालशब्दाभ्यां स्वरेण स्वरतः वर्णेन वर्णत इत्यादिवत् । लिङ्गमिति संख्याया अप्युपलक्षणम् । तिङर्थकर्त्रादिगता हि संख्या क्रियां न विशिनष्टि किंतु काल एव । तथाचोक्तं हरिणा–

क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका । इति ।

क्रियाभेदाय क्रियां भेत्तुं विशेषयितुं (स्वेन रूपेण रूपणीयं कर्तुं) कलस्तु–कालएव न संख्यादिः । सर्वस्येति क्रियाभिन्नस्य नामार्थस्येत्यर्थः । कालस्त्विति तु नातद्भेदनस्य[1] व्यावर्तनात् ॥

२. साध्यत्वं च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदको धर्मः । तद्रूपवत्त्वमेवासत्वभूतत्वम् लिङ्गाद्यनन्वितत्वं तु व्युत्पत्तिनिमित्तमात्रम् । अन्यदेव हि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम् । आद्यं यथा गोर्गमनकर्तृत्वम् गच्छतीति गौरितिव्युत्पत्तेः । गमेडोंस् । द्वितीयं यथा तस्यैव शृङ्गसास्नादिमत्त्वम् । "सास्ना तु गलकम्बलः" ॥ पचतीत्युक्ते हि क्रियान्तराकाङ्क्षा नोत्तिष्ठति । सैव च पाक इत्युक्ते उत्तिष्ठत्येव भवति अभूद्वेति स कृदन्तनामप्रतिपाद्यो भावः सत्वप्रधान इति प्रोच्यते ।

३. आचार्यदुर्गस्तु नामपदावाच्यार्थाश्रयक्रियाव्यङ्ग्यो भावः पाकरागत्यागादिः स यत्र प्रधानं गुणभूता च क्रिया तदिदं भावप्रधानं । किं पुनस्तदिति आख्यातम् आख्यायतेऽनेन गुणभावेन वर्तमाना अनेककारकप्रविभक्ता स्फुरमाणेव प्रधानद्रव्यभावाभिव्यक्त्युन्मुखीभूता क्रिया । तस्याश्च प्राधान्येन प्रवर्त्तमानो भावः स्वात्मलाभप्रधान इत्याख्यान इत्यादिस्वमतं सोपपत्तिकमुक्तवाँस्तत्तत एव स्ववधेयम् ॥

४. क्रिया चैषामुपरि प्राधान्येन वर्त्तते । यत एतानि तन्मुखप्रेक्षकाणि तां विना व्यर्थप्रयत्नानीव प्रतिभान्ति । नहि देवदत्तस्य गौर्ब्राह्मणाय गेहाद्‌ङ्गायां हस्तेन मयेत्येतत्कारकचक्रप्रयोगेणापि कंचिदर्थं प्रतियन्त्यन्तरेण दीयत्ते इति क्रियाम् । तथाचोक्तम् । सर्वं वाक्यं क्रियया परिसमाप्यत इति । परिसमाप्यत इत्यस्य शान्ताकाङ्क्षं भवतीत्यर्थः ॥

1 संख्याकृतक्रियाभेदनस्य ।

नम् । किंपुनस्तत् **आख्यातम्** आख्यायन्ते क्रियागुणभावेन वर्तमानानि स्त्रीपुंनपुंसकानि अनेनेत्याख्यातम् (तिङन्तम्) आङ्पूर्वकाद्व्यक्तवागर्थकाच्चक्षिङो बाहुलकात्करणे क्तः । चक्षिङः ख्याञ् (२-४-५४) सामान्ये नपुंसकम् । तत्पुनरेतच्चतुर्विधं भवति । कर्तरि भावे कर्मणि कर्मकर्तरि चेति । तत्र पचतिदेवदत्त इति कर्तरि । भूयते देवदत्तेनेति भावे । पच्यते ओदनो देवदत्तेनेति कर्मणि । पच्यते ओदनः स्वयमेवेति कर्मकर्तरि । चतुर्ष्वप्यवयवार्थानि द्रव्याणि अप्रधानानि क्रियैव प्रधानम् ॥ इत्थं नाम्नामाख्यातजत्वात्प्रतिज्ञाक्रमं भित्वा पूर्वमाख्यातलक्षणमुक्तम् ।

इदानीं नाम्नां लक्षणमुच्यते **सत्वप्रधाना**नीति । सीदति गच्छति (अन्वेति) लिङ्गसंख्यादिकमस्मिन्निति सत्वं (द्रव्यम्) षद्लृ विशरणगत्यवसादनेष्वित्यस्मादधिकरणे औणादिकस्त्वन्प्रत्ययः । तद्येषु प्रधानं गुणभूता च क्रिया तानीमानि सत्वप्रधानि । कानि पुनस्तानि नामानि । नमन्त्याख्यातशब्दे गुणभावेन नम-(य-)न्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि । णम् प्रह्वत्वे इत्यस्य शुद्धस्यान्तर्भावितण्यर्थस्य वा "नामन्सीमन्नि"-त्यादिनौणादिको निपातः । सामान्ये नपुंसकम् । यथैव ह्याख्याते विद्यमानमपि द्रव्यमविवक्षितमेवमिहापि विद्यमानापि क्रिया अविवक्षिता, द्रव्यपरत्वात्सत्वशब्दस्य तद्विक्रियाजनितमुत्तरकालं क्रियाशेषभूतमभिधाय धात्वर्थोऽसौ व्यावर्तते । स्त्रीपुंनपुंसकभेदं-निपातोपसर्गाणामपि वा

---

१. कृत्यल्युटो बहुलम् (३-३-११३) इत्यत्र बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थं तेन कर्तर्यपि विहितः ण्वुल्तृचौ (३-१-१३३) इति ण्वुल् पादाभ्यां ह्रियत इति पादहारक इत्यत्र कर्मणि भवति, यथा वा भावकर्मणोर्विहितोऽपि तव्यत्तव्यानीयरः (३-१-९६) इत्यनीयर् स्नानीयं चूर्णं दानीयो विप्र इत्यत्र करणे संप्रदाने च क्रमेण भवति ।

२. यद्यपि पाको नाम विक्लित्तिरवयवशैथिल्यादि स च न ओदनस्य क्रियते किंतु तण्डुलस्यैव तथापि सूत्रशाटकवद्भाविसंज्ञया निर्देशः पाकेन निष्पाद्यत इत्यर्थः ॥

३. तथाचोक्तम्-शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते ।
तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ १ ॥ इति ॥
अन्यच्च-अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः ॥
तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥ १ ॥
निर्देशः कर्मकरणं प्रदानमपकर्षणम् ।
स्वाम्यर्थश्चाधिकरणं विभक्त्यर्थाः प्रकीर्तिताः ॥ २ ॥ इति ॥
अत्र चकारः संबन्धान्तरं कर्तृकर्मणी च समुच्चिनोति । सर्वेषामेषां षष्ठ्यर्थत्वात् ॥

४. अतएव-कृत्तद्धितसमासाश्चेति (१-२-४६) सूत्रे चेति सार्थकम् । अनर्थका अपि निपाता भवन्तीति ॥

1 यथास्य सूत्रस्य शाटकं वयेत्युक्ते यदा वातव्यस्तदा न शाटको यदा शाटकस्तदा न वातव्य इति मन्ये स वातव्यः यस्योतस्य शाटक इत्येषा संज्ञा भविष्यति । एवमिह स पक्तव्यो यस्य पक्स्यौदन इत्येषा संज्ञा भविष्यति ॥

क्वचिन्नामत्वमपेक्ष्य बहुवचननिर्देशो नामानीति । एकेत्वाहुः । भाव–काल–कारक–संख्याश्चत्वारोऽर्था आख्यातस्य । तेषां मध्ये भावस्य प्रधानता भवति । अतो भावप्रधानमाख्यातमित्युक्तम् । नाम्नोऽपि सत्त्वं[1]–द्रव्य–संख्या–लिङ्गमित्येते चत्वारोऽर्थास्तेषां मध्ये सत्त्वं प्रधानमित्यतः सत्त्वप्रधानानि नामानीत्युक्तमिति ।

एवंतावदनयोर्नामाख्यातयोः परस्पराविनाभूतयोः स्वपदार्थोक्तावेकस्य भावप्राधान्यमपरस्य च सत्त्वप्राधान्यमिति स्थितम् ।

अथानयोर्गुणप्रधानभावविषये शङ्कासमाधी युगपदेकवाक्येनाचष्टे—

**तद्यत्रोभे, भावप्रधाने, भवतः ॥ १३ ॥**

**तत्**–अथ[3] पुनः **यत्र**–यस्मिन्वाक्ये एते (नामाख्याते) **उभे भवत** (इत्युभयोः शेषः[4]) तत्र कस्य प्रधानमर्थः कस्य च गुणभूत इत्याशङ्कायां समाधिमाह–**भावप्रधाने भवतः** । भावः[5] प्रधानं ययोस्ते भावप्रधाने । अयमर्थः । वाक्ये ह्याख्यातं प्रधानं तस्य चिकीर्षितत्वात् । तदर्थत्वाच्च[6] गुणभूतं नामेतीदमाख्यातमेव वाक्ये प्रधानमिति ॥

**अथ** पुनः कथमभिनिर्वर्त्यमानो भाव आख्यातेनोच्यते किंवा[7] तदाख्यातमित्यपेक्षायां शब्दार्थसंबन्धस्य लोकप्रसिद्धत्वाल्लोकप्रसिद्ध्यैवोदाहरति—

**पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् ॥ १४ ॥**

अपूर्वमनपरं सन्तमेकत्वात्**पूर्वापरीभूतं** पूर्वापरमिव पौर्वापर्येणावस्थितम् । अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विरिति (५–४–५०) च्विः । अस्य च्वाविति (७–४–३२) ईत्वम् एकमनेकासु क्रियासु (उपानदधिनहन–पूर्वोत्तरपदविहरण–पथिभोजन–शयनाऽसनोदकपानाद्यासु) आश्रितं तदभिनिर्वृत्तिवशेनाभिनिर्वर्तमानं

१. सत्त्वं सत्तेत्यनर्थान्तरम् । तदिह स्वार्थ इत्यप्युच्यते । सच प्रवृत्तिनिमित्तम् । यदर्थज्ञानाच्छब्दप्रवृत्तिस्तत्प्रवृत्तिनिमित्तम् । यथा सास्नादिमत्त्वं गोः । तदेव च गवि गोत्वम् । वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वं प्रवृत्तिनिमित्तत्वमिति नव्याः । तदाश्रयो द्रव्यम् ॥

२. अवरोहणक्रमेणोत्तरस्य पूर्वमभिधानमत्र ॥

३. अव्ययानां नानार्थत्वात्तदित्यव्ययमथ पुनरित्येतस्मिन्नर्थे वर्तते ॥

४. यथा अष्टन आ विभक्तौ (७–२–८४) रायो हली–(७–२–८५) त्यत्र हलीत्युभयोः शेष इत्युक्तं महाभाष्यादौ ।

५. भावः साध्यावस्थापन्नो धात्वर्थः आख्यातवाच्यः । वाच्यवाचकयोश्चाभेदारोपादाख्यातशब्देनात्र सर्वत्र भाव एवोच्यते इति ध्येयम् । व्यक्तीभविष्यति चैतदुपरिष्टात् ।

६. तदर्थस्य भावनिष्पत्तावङ्गत्वात् ॥

७. किमिति प्रश्ने । भावसामान्यस्वरूपविषयकोऽयं प्रश्नः ॥

**भावं** किंकरोतीति पृच्छते कस्मैचिदन्य **आचष्टे व्रजतीत्याख्यातेन** । एवं **पचती**त्यत्रापि बोध्यम् ॥

**उपक्रमप्रभृतीति** । उपक्रमः आरम्भस्तस्मादारभ्यापवर्गपर्यन्तमन्तिमक्रियावसानमित्यर्थः । एतच्च भावविशेषणमेतदर्थश्चोक्तं[2] एव । एवमनेकक्रियाभिर्निर्वर्त्यमानो भाव आख्यातेनोच्यत इति सिद्धम् ॥ तथाचोक्तम्—

क्रियासु बह्वीष्वभिसंश्रितो यः पूर्वापरीभूत इवैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध आख्यातशब्देन तमर्थमाहुः ॥ १ ॥ इति ॥

इत्थं भावसामान्यस्वरूपमभिधाय भावविशेषस्वरूपं निर्विवक्षन्पूर्वोक्तभावलक्षणस्य पुंयोगमपेक्ष्य क्वचिदपवादमाह—

**मूर्तं सत्वभूतं सत्वनामभिः ॥ १५ ॥**

कदाचित्तु तमेव भावं तथैवोपक्रमप्रभृत्यपवर्गपर्यन्तमभिनिर्वर्तमानं **मूर्तं** किमपि रूपान्तरतामापन्नं **सत्वभूतं** सत्वरूपिणं[3] **सत्वनामभि**र्लिङ्गसंख्यायुक्तैः शब्दैराचष्टे इत्यनुवर्तमानमत्रापि द्रष्टव्यम् । कथमिति तदुदाहरणमाह—

**व्रज्यापक्तिरिति ॥ १६ ॥**

तथाचोक्तमभियुक्तैर्महाभाष्यकृदादिभिः "कृदभिहितो भावो द्रव्यवत्प्रकाशत" इति ।

अन्यत्रापि—

क्रियाभिनिर्वृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात् ।
संख्याविभक्तिव्ययलिङ्गयुक्तं भावं[4] तदा द्रव्यमिवोपलक्ष्ये ॥ १ ॥ इति ॥

व्ययो विकारः । तत्कृतो भेद इति यावत्तेन लिङ्गेन च युक्तमिति समुदितार्थः । एतच्च शब्दशक्तिस्वाभाव्यादित्यवगन्तव्यम् ॥

इत्थं (सत्वभूत) भावविशेषस्वरूपं सोदाहरणमभिधाय सत्वसामान्यस्वरूपमुदाहरणेनैवोपदिशति—

**अद इति सत्वानामुपदेशः ॥ १७ ॥ इति ॥ १ ॥**

सामान्यत इति शेषः । समान्यतः (सामान्येन रूपेण) सत्वानां द्रव्याणामुपदेशोऽद **इति** । उपलक्षणमेतदन्येषामपि लिङ्गसामान्यवचनाना**मिति** व्याख्यात**मादिमं खण्डसूत्रम्** ॥

---

१. अधिश्रयणाद्यधःश्रयणपर्यन्तः क्रियाकलापः पचतिना विक्लित्त्यनुकूलत्वेनैकरूपेणैवोच्यते । अविभक्तकर्तृकमिदं द्वितीयमुदाहरणमित्युदाहरणद्वयमत्र भावद्वयोपदर्शनायेति बोध्यम् ॥

२. उपानदधिहननेत्यादिना ॥

३. सत्त्वमिति भावप्रधाननिर्देशेन सत्त्व–(द्रव्य–) त्वं प्राप्तमित्यर्थः । अस्य साधनमुक्तं प्राक् (६-पृ०) ॥

४. युक्तो भाव इति मुद्रितपुस्तकेऽपपाठः ॥

तदेवं सत्वसामान्यस्वरूपमुपदिश्य तद्विशेषस्वरूपमुपदिशति—

**गौरश्वः पुरुषो हस्तीति ॥ १ ॥**

**सत्वानामिति** पूर्वस्मात्खण्डसूत्रान्तवाक्यादनुवर्तते । **विशेषोपदेश** इति शेषः । सोपाधिकनिरुपाधिकोपप्रदर्शनार्थमनेकोदाहरणम् । **इतिशब्द** आद्यर्थः । ज्वलितिकसन्तेभ्यः ( ३–१–१४० ) इत्यत्र यथा ॥

इत्थं सत्वसामान्यविशेषस्वरूपे उदाहरणमुखेनाभिधाय भावसामान्यमुपदिशति–

**भवतीति भावस्य ॥ २ ॥**

**सामान्येनोपदेश** इति शेषः । अनेनै[२] हि सर्वक्रियाप्रसवबीजभूतमस्तित्वमात्रमेव अनुपसृष्टेनोच्यत इति उपपन्नं भवति सामान्यवाचित्वमस्य भवतिशब्दस्य ॥ भावविशेषस्वरूपमुपदिशति—

**आस्ते शेते व्रजति तिष्ठतीति ॥ ३ ॥**

सकर्मकाकर्मकोपप्रदर्शनार्थमुभयेषामुदाहरणम् । **इतिशब्दो**ऽत्राप्याद्यार्थ एव ॥ एवं तावन्नामाख्यातोपसर्गनिपातभेदेन पदचतुष्टयं भाववचनता द्रव्यवचनता गुणभावः प्रधानभावः पूर्वापरीभावः सामान्यवाचित्वं विशेषवाचित्वमित्युक्तं तदेव स्थूणानिखननन्यायेन दृढीकर्तुमाक्षिपति—

**इन्द्रियनित्यं वचनमौदुम्बरायणस्तत्र चतुष्ट्वं नोपपद्यते ॥ ४ ॥**

उच्यते[३]ऽनेनेति **वचनं** वाक्यं नामाख्यातोपसर्गनिपातात्मकं **तदिन्द्रिये** इन्द्रस्यात्मनो लिङ्गे (अनुमापके) वाग्रूपे **नित्यं** नियतं, **तत्र** चतुष्ट्वं **नोपपद्यते**; सहभावाभावादित्यौदुम्वरायण आचार्यो **मन्यते** इति शेषः । उदुम्बरस्य गोत्रापत्यमौदुम्बरिः । अतइञ् (४–१–९५) इत्यपत्ये गोत्ररूपे इञ् । आदिवृद्धिः । ओदुम्बरेरनन्तरापत्यमुदुम्बरस्य युवापत्यमौदुम्वरायणः यञिञोश्चेति ( ४–१–१०१ ) यूनि- (युवापत्ये) फक् । अयमर्थः । यावदेव वक्तुर्वागिन्द्रिये वचनं तावदेव तदस्तीति शक्यते वक्तुं प्रच्युतं च नास्त्येवोच्चरितप्रध्वंसित्वाद्वर्णानामिति नास्ति पदभावोऽपि । प्रागेव वाक्यभावः । नहि विनष्टाविनष्टयोर्वर्णयोः पदयोर्वा सह परिसंख्यानं संभवति, तस्माद्वचनानित्यत्वात्पदचतुष्ट्वानुपपत्तिरिति ॥ किंच—

**अयुगपदुत्पन्नानां वाशब्दानामितरेतरोपदेशः ॥ ५ ॥**

**नोपपद्यत** इत्यनुवर्तते । वाशब्दः समुच्चयार्थे वक्ष्यते ( १–२–३ ) एवं

---

१. सामान्यवृत्त्या विशेषवृत्त्या चोभयथाशब्दः प्रवर्तत इत्युभयमुपदर्शितम् ॥

२. अत्रहि सर्वेषां सत्तावाचिनामध्ययने प्राप्ते भवतिरेवैक उदाहरणार्थः परिगृहीतः । विद्यमानत्वमेवानुभवन्तः सर्वे भवतिशब्दवाच्या अन्याभिर्विशेषक्रियाभिरभिसंबध्यन्त इति ॥

३. उच्चार्यप्रवृत्तिनिवृत्ती बोध्येते अनेनेति करणे ल्युट् ।

४. तथाच पाणिनिसूत्रम् । इन्द्रियमिन्द्रलिङ्गम् ( ५–२–९३ ) इति । अचेतनं चेतनाधिष्ठितं सत् कार्यं करोतीति वास्यादौ गृहीतव्याप्तेः "रूपादिज्ञानं सकरणकं क्रियात्वाच्छिदावत्" इत्यनुमित्या देहेन्द्रियादिव्यतिरिक्तस्यात्मनोऽस्तित्वावगमो भवति ॥

चैतेषामयुगपदुत्पन्नानां शब्दानां योऽयमितरेतरोपदेशः परस्परगुणप्रधान-भावेन (नाम्न आख्यातं प्रति गुणभावेन आख्यातस्य च नामप्रति प्रधानभावेन) उपदेशः । अयं च नोपपद्यते । किं कारणं नहि विनष्टं नाम गुणभावमियादाख्याते, नाऽपि च विनष्टमाख्यातं प्रधानभावमियान्नाम्नि नहि विनष्टाविनष्टयोः परस्परं गुणप्रधानभावोऽस्ति । किंच—

**शास्त्रकृतो योगश्च ॥ ६ ॥** अत्रापि **नोपपद्यत** इत्यनुवर्तते । यश्चायं **शास्त्रकृतः** शास्त्रदृष्टः **योगः** शब्दस्य शब्दान्तरेण संबन्धः । तद्यथोपसर्गस्य धातुना, धातोः प्रत्ययेन, प्रत्ययस्य च लोपागमवर्णविकारैः । सोऽपि वचनानित्य-त्वान्नोपपद्यते । नहि विनष्टाविनष्टयोर्योगोऽस्ति । तस्माद्यएव नामाख्यातयोरितरे-तरगुणप्रधानभावः उपसर्गनिपातानां नामाख्याताभ्यां योगे । यच्च पदचतुष्टयमुक्तं सर्वमेतदसम्यगिति ॥

प्रतिक्षिपति—

**व्याप्तिमत्त्वात्तु शब्दस्य ॥ ७ ॥**

**सर्वमेतदुपपद्यत इति** शेषः । तुर्भेदार्थ उत्तरपक्षतां ध्वनयति । व्यापनं व्याप्तिः । स्त्रियां क्तिन्निति (३-३-९४) भावे क्तिन् । सा यस्मि-न्नस्ति सोऽयं व्याप्तिमान् शब्दः । तद्भावो व्याप्तिमत्त्वं तस्य भावस्त्वतलाविति (५-१-११९) भावे त्वः । तस्माद्व्याप्तिमत्त्वाच्छब्दस्य सर्वमेतदुपपद्यते ।

१. वाक्यावयवभूतानाम् ॥ अत्रेदं बोध्यम् । उपपद्यते—युगपदुत्पन्नानामित्येवं पठि-तयोर्वाक्ययोः सति पूर्वरूपेऽभ्युपगते अयुगपदिति शक्यते भेत्तुम् । अनभ्युपगते तु तस्मि-न्यथास्थितमेव युगपदित्यादि वाक्यम् । तत्राद्यपक्षमपेक्ष्य व्याख्यामार्गोऽयं सुज्ञेयत्वादुप-दर्शितः । एतच्च नैयायिकमतोत्थानबीजम् । वैयाकरणास्त्वपरं पक्षं कक्षीकृत्येदं व्याच-क्षते—यथाह भगवान्दुर्गः । अथ मतम् "अविचालिन एवैते कूटस्था अविनाशिनः शब्दास्ते तु कल्पान्ते" तस्माद्व्याप्तिरूपाद्विशीर्णेष्वभिधेयेष्वभिधातृषु कारणभावमापद्यमा-नेषु आश्रयाभावादेवावस्थातुमशक्नुवन्तः अभिधेयाभिधातृसहिता एव कारणात्मभावम-धिकमनुभूयाभिसंस्तवकाले कल्पादावन्यकल्पविशिष्टकर्मनिर्जितकार्यकारणसर्वभूतसाधारणा-त्मभूते हिरण्यगर्भे विवर्तमाने तद्बुद्धिमाश्रयं प्राप्य तेनैव सह युगपदेवाभिव्यज्यन्ते विशेषा-त्मलाभाय शब्दा इति । अत्र ब्रूमः । एवमप्येतेषां युगपदुत्पन्नानां युगपदुत्पत्तावपि सत्यां यद्यपि पदचतुष्टयं प्राप्नोत्येव सहावस्थितानां, तथापि इतरेतरोपदेश इतरेतरगुणप्रधान-भावश्च न प्राप्नोति । नहि युगपदुत्पन्नयोर्गोविषाणयोरितरेतरगुणप्रधानभावोऽस्ति । किंचा-न्यत् । कूटस्थेषु चाविचालिषु नित्येषु शब्देषु य एष शास्त्रकृतो योगः स एष नोपपद्यते । किं कारणम्? अयुक्तो हि युज्यते । नित्यं युक्ता हि धातव उपसर्गैः प्रत्ययैश्च, प्रत्ययाश्च लोपागमवर्णविकारैरिति । तस्मान्नित्यपक्षेऽपि वचनस्य तदेतदुपवर्णितं गुणप्रधानभावादि पद-चतुष्टयमधिकृत्य, सर्वमेतदसम्यगिति ॥

२. समाधत्ते ॥

३. एतत्पदचतुष्कादि । तद्यथा । विनाशपक्षे पुरुषप्रयत्नोपजनितादक्लोद्घातात्परस्यार्थ-प्रत्ययमाधाय शब्दव्यक्तय एव ध्वंसन्ते नतु शब्दाकृतयः । तास्तु तयाऽभिधानशक्त्या बुद्धि-

अयमभिसन्धिः । शरीरे हृदयान्तर्गताकाशप्रतिष्ठिता बुद्धिरेवाभिधानाभिधेयोभयस्वरूपा, तयो-( रभिधानाभिधेयरूपयोर्बुद्ध्यो- ) र्मध्येऽभिधानरूपया बुद्ध्याऽभिमतप्रयोजनविजिज्ञापयिषया पुरुषेण तदभिव्यक्तिसमर्थेन स्वगुणभूतप्रयत्नेनोदीर्यमाणः शब्द उरःकण्ठादिवर्णस्थानेषु निष्पद्यमानस्तया पुरुषार्थाभिधानसमर्थवर्णादिभावमापद्यमानः पुरुषप्रयत्नेन बहिर्निःक्षिप्तोऽविनाशिनि व्यक्तिभावमापन्नः श्रोत्रद्वारेणानुप्रविश्य प्रत्याय्यास्य बुद्धिं सर्वार्थरूपां सर्वाभिधानरूपां व्याप्नोतीत्येवं व्याप्तिमाञ्छब्दः । नह्यसंव्याप्य पुरुषस्य बुद्ध्यवस्थमर्थप्रत्ययमादधीत न चानवस्थितो व्याप्नुयात्ततश्च स शब्दः स्वमर्थमभिदधत्स्वक्रियाप्रवेशोपजनितेनाभिधानेनाख्यातमित्येवमादिना स्वात्मानमभिसंबध्य तिरोभवितुमुपक्रमते विनाशं चोपैति । तस्य स्वदेशोपजनितैराख्यातादिभिः स्वप्रदेशविशेषानुस्मृतिपूर्वकं परिसंख्यानमुपपद्यत एवेति ॥ तथाच व्याप्तिमत्त्वाच्छब्दस्य लोकवेदव्यवहारार्थं पदचतुष्टमुपादीयते । ⁴एवमन्यत् ॥

द्वारेणावस्थिताः स्वानर्थान्प्रत्याययन्त्यः ( प्रकाशयन्त्यः ) स्थिता एव भवन्ति तासु साक्षात्पदपरिसंख्यानं वर्तमानमितरासु विनाशिनीषु व्यक्तिषु लक्षणयोपचर्यते इति । व्याप्तिमत्त्वादित्यनेनैव इतरेतरोपदेशः प्रत्युक्तः । शास्त्रकृतो योगश्च नामाख्यातरूपबुद्धित्वे सत्त्वक्रियाविषये गुणप्रधानभावेनातिष्ठेत् । तयोर्गुणप्रधानभावे सति तच्छब्दे लक्षणयोपचर्यते । तथाच धातुरूपा बुद्धिस्तदर्थरूपया बुद्ध्या संयुज्यते । बुद्धिरेव हि धात्वादिरूपेण विपरिणममाना शास्त्रेण संस्क्रियते । तस्यां च संस्क्रियमाणायां शब्दे संस्कारोपचारः क्रियते । तदभिधायकत्वाच्छब्दस्य ॥ नित्यत्वपक्षेऽपि—युगपदुत्पन्नानां गुणप्रधानभावो गोविषाणवन्नास्तीति यदुक्तपूर्वं तदप्यनैकान्तिकं दृष्टान्तभूतम् । दृष्टो हि एकस्मिन्नेव काले गुणप्रधानभावो युगपदुत्पन्नयो राजपुत्रामात्यपुत्रयोरिति ॥ एतत्तत्त्वमनुपदं स्फुटयति—अयमित्यादिना ॥

१. अभिसन्धिर्गूढोऽभिप्रायः ॥ २. तथाच पाणिनिशिक्षायाम्—

आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ १ ॥ इति ।
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते-इति च ॥

आत्मा अन्तःकरणम् संस्काररूपेण स्वगतानर्थान्बुद्ध्या समेत्य एकबुद्धिविषयान्कृत्वा तद्बोधनेच्छया[1] मनः युङ्क्ते युक्तं करोति । तदिच्छावन्मनः कायाग्निं जाठरमग्निमभिहन्ति । स कायाग्निः । सोदीर्णः स मारुत उदीर्ण ऊर्ध्वं प्रेरित इत्यादिस्तदर्थः ॥

३. अर्थः प्रयोजनम् । "अर्थोऽभिधेयैरवस्तुप्रयोजननिवृत्तिषु" इत्यमरः ॥

४. एतत्तत्त्वमनुपदोक्तं द्रष्टव्यम् । केचित्तु इन्द्रियनित्यत्वात्पदचतुष्टानुपपत्तिस्तदाश्रयस्य सर्वस्येत्येवमाक्षिप्ते परिहारपक्षेणेदमुभयपक्षसाधारण्येनेत्थं व्याचक्षते—युगपदुत्पन्नानां वेत्यादि । अत्र पक्षे समञ्जसएव वाशब्दः । युगपदुत्पन्नानां वा अयुगपदुत्पन्नानां वाऽनित्यानां वा नित्यानां वा इतरेतरोपदेशः । इतरस्येत्याख्यातस्य क्रियावचने शब्देऽभिधान-

1. इच्छाऽप्यन्तःकरणवृत्तिविशेष एव । अन्तःकरणपरिणामविशेषो मनःकर्मात्र ॥

तद्यथा—

**नूनं सा ते प्रतिवरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ॥**
**शिक्षा स्तोतृभ्यो मातिधग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ १॥**

( ऋ. सं. २. ६. ६. ६) गृत्समदस्येदमार्षं त्रिष्टुप्। अत्र नूनमिति पादपूरणएवेति सेत्यारभ्य व्याचष्टेऽर्थतः—

**सा ते प्रतिदुग्धां वरं जरित्रे ॥ २ ॥**

हेइन्द्र, सा ते तव दक्षिणा ( या पुत्रभावके कर्मणि ऋत्विग्भ्यो देया ) मघोनी मघवती हिरण्यधान्यादिधनेन संयुक्ता ( तद्वती ) सती जरित्रे स्तुवते यजमानाय वरं श्रेष्ठमभिमतमर्थं प्रतिदुहीयत् प्रतिदुग्धाम् "छन्दसि परेऽपि" "व्यवहिताश्चे"ति (१-४-८२) प्रतेर्व्यवहितस्यापि प्रयोगः। किंच स्तोतृभ्योऽस्मभ्यं "कमान्" इति शेषः शिक्षा प्रयच्छ। "शिक्षतिर्दानकर्मा पठित"इति स्कन्दस्वामिभाष्यम्। आइत्ययं प्र इत्यस्यार्थे । निपातानां नानार्थत्वात् । प्रदेहि। किंच मातिधक् मास्मानतिहाया-( तीत्या–) न्येभ्यो देहि ( अस्मानतिक्रम्यान्येभ्यो मा दाः) प्रथममस्मभ्यं दत्वा ततोऽन्येभ्योऽपि दीयताम्। दहेर्दानार्थस्य लुङि "मन्त्रे घसे–" ( २-४-८० ) तिच्लेर्लुक्। किंच भगो धनं नोऽस्माकमस्तु इति शेषः। येन विदथे यज्ञे ( स्वेगृहे ) बृहन्महदूर्जितंवदेम ब्रवाम दीयतां भुज्यतामिति। किंच ( तवानुग्रहात् ) सुवीराः वीरवन्तः ( पुत्रवन्तः )यद्यपुत्राः। मत्वर्थीयः सुः पुरस्तात्प्रयुक्तश्छान्दसः। अथ पुत्रवन्तस्तदा शोभनवीराः सुपुत्रा भवेम ॥ वीरशब्दश्छन्दसि पुत्रपर्यायवचन इह निरुक्तः ॥ १ ॥ अथैकपदनिरुक्तम्—

**वरो वरयितव्यो भवति ॥ ३ ॥**

व्रियते ह्यसाविति वरः। वृ वरणे ( ऋ. उ. ) ऋदोरप् ( ३-३-५७ ) इत्यप् प्रत्ययःकर्मणि। जरितृशब्दं निर्वक्ति—

---

१ प्रतिपूरयतु ददात्विति यावत् दक्षिणागुणकाङ्क्षि कर्मणः फलप्राप्तिरिति दक्षिणायामेव फलदातृत्वमुपचर्यते । सायणस्तु प्रतिदुहीयत्संपादयति तादृशीं दक्षिणां स्तोतृभ्योऽस्मभ्यं शिक्षाप्रयच्छ। किंच भगो भजनीयस्त्वं मातिधक्। यद्वा नोऽस्माकं कामान्मा धाक्षीः। अपेक्षितफलदानेन पूरयेत्यर्थः। सुवीराः शोभनपुत्रपौत्राः सन्तो वयं विदथेऽस्मिन्यज्ञे बृहत्प्रभूतं स्तोत्रं वदेम त्वामुद्दिश्य ब्रवाम इत्येवं व्याख्यत्। शेषं समानम् ॥

२. ते प्राग्धातोः ( १-४-८० ) इति हि लौकिको नियमः। ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्या इति हि तदर्थः ॥

३. भस्मीकरणार्थस्यापि धातूनामर्थनिर्देशस्योपलक्षणत्वादत्र दाने वृत्तिरेवमुत्तरत्रापि बोध्यम् ॥

४. विदथशब्दो यज्ञवचनश्छन्दसि। विद ज्ञाने (अ० प० विद् विचारणे (रु० आ०) विद्लृलाभे (तु० उ०) विद् सत्तायाम् (दि० आ०) रुदिविदिभ्यां ङित् (उ० ३-१११) इति अथप्रत्ययः सच ङित् ङित्वाद्गुणाभावः। ज्ञायते हि यज्ञः। लभते हि दक्षिणादिरत्र विचार्यते हि विद्वद्भिः। भावयत्यनेन फलम् ॥

५. यदा स्वे गृहे यज्ञः करिष्यते तदा तत्र।

**जरिता गरिता ॥ ४ ॥**

स्तुत्यर्थस्य गॄधातोः ( भ्वा. प. ) तृचि रूपम् । गरितेति पर्यायकथनम् । गृणातिरर्चतिकर्मा ( निघ. ३-१४ ) अर्चापि स्तुतिविशेषैव ।

मघोनी शब्दं निर्ब्रूते—

**दक्षिणा मघोनी मघवती ॥ ५ ॥**

अत्र दक्षिणा मघोनीति प्रतीकम् । मघवतीति मघोनीत्यस्य पर्यायः ।

तदर्थं व्युत्पादयति—

**मघ इति धननामधेयम् ॥ ६ ॥**

तदस्यास्तीति विग्रहे "तदस्यास्त्यस्मिन्–" ( ५-२-९४ ) विमतुप् "मादुपधायाः" ( ८-२-९ ) इति मस्य वः ।

मघशब्दं निर्वक्ति—

**मंहतेर्दानकर्मणः ॥ ७ ॥**

मंहतिर्दानकर्मा ( प० ३-२०-१० ) घनर्थे कविधानम् ( ३-३-५८ वा. ) इत्यत्र परिगणनस्य प्रायिकत्वात्कर्मणि कप्रत्यये पृषोदरादित्वान्नलोपो हस्य घश्च भवति ॥ मंह्यते दीयते इति मघम् धनम् ॥ अथ सिंहावलोकितकेन प्रतीकोपात्तं दक्षिणाशब्दं निर्ब्रवीति—

**दक्षिणा दक्षतेः समर्धयति कर्मणः व्यृद्धं समर्धयतीति ॥ ८ ॥**

समर्धयत्यर्थकस्य दक्षतेर्दक्षवृद्धौ शीघ्रार्थे चेति ( भ्वा. आ. ) धातोरौणादिक इनच् । एतदेव विवृणोति—व्यृद्धं समर्धयतीति । यज्ञे हि यत्किंचिद्विगतर्द्धिकं ( न्यूनं ) भवति तदियं ( दक्षिणा ) समर्धयति विवर्ध्य पूरयति विशिष्टं यज्ञस्य साधनमेतदितीयं दक्षिणेत्युच्यते ॥ प्रकारान्तरेण निर्वक्ति—

**अपि वा प्रदक्षिणा गमनात् ॥ ९ ॥**

दक्षिणाशब्दोऽत्र दक्षिणादाच् ( ५-३-३६ ) इत्याजन्तोऽव्ययम् । प्रत्ययविधानकाले प्रेत्युपसर्गस्य पृथक्कृतिरार्षविज्ञानबलात् । अर्थकाले तूपसृजत्येव । तथाच गृहीतदक्षिणस्यर्त्विजोऽदूरेणाग्निम् प्रदक्षिणेन गमनादियं दक्षिणा । अपीत्यथेत्यस्यार्थे ॥

अथवा दक्षिणाम्—

**दिशामभिप्रेत्य ॥ १० ॥**

---

१. सं–सम्यक् अर्धयति वर्धयति, ऋधु वृद्धौ (भ्वा० प० ) । इत्थंच वृद्ध्यर्थस्य समर्धयत्यर्थकत्वं युज्यत एव ॥

२. "उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभागिति" विधेयप्राधान्यात्स्त्रीलिङ्गनिर्देशो न कृतः ॥

३. यतो व्यवस्थुपसर्गः । निरुक्तमेतत् ( उपसर्गपदम् ) अधस्तात् ॥

४. एनबन्यतरस्यामदूरेऽपञ्चम्याः ( ५-३-३५ ) इत्यतोऽदूरेऽपञ्चम्या इत्यनुवर्त्य विहितो आच् पञ्चमीं विहाय यथासंभवं तृतीयासप्तम्यावन्ताद्दक्षिणशब्दाद्भवतीत्येवं विवृणोत्यत्र ॥ अग्निमित्यत्र एनपा द्वितीये ( २-३-३१ )ति द्वितीया । अत्रेति तदर्थः ॥

साहि दक्षिणस्यां वेदिश्रोणौ—अग्रेण गार्हपत्यम्, जघनेन सदः, दक्षिणेनाग्नीध्रीयं गत्वा अन्तर्वेदि स्थित्वा अन्तरेण चात्वालोत्करौ, तमाग्नीध्रं चोत्सृज्यमाना—गच्छतीति—दिक् ॥ ११ ॥

पुनर्दक्षिणा । अत्र निदानमाह—

**हस्तप्रकृतिः ॥ १२**

हस्तः प्रकृतिः कारणं नामनिदानं यस्याः सा । तथाच "प्राङ्मुखस्य प्रजापतेर्दक्षिणो हस्तो बभूव । सा दक्षिणादिगभवदि"त्याम्नायते । अथ—

**दक्षिणो हस्तः ॥ १३ ॥**

कस्मात्पुनर्दक्षिणः? इत्यनुयुक्तः प्राह—

**दक्षतेरुत्साहकर्मणः ॥ १४ ॥**

उत्साहार्थस्य दक्षधातोरुक्तदिशासिद्धिः । स यथोत्साहवान्भवति कर्मसु न तथा सव्यः ॥

---

१. सेत्येतस्या गतिक्रियायाः कर्तृपदम् । ऋत्विग्द्वारकमेव हि तस्यागमनमुपपद्यत इति गच्छन्तीति पाठो मुद्रितपुस्तकेषु दुर्गभाष्ये । सच प्रामादिकस्तत्कर्तुर्ऋत्विजोऽनुपादानादुपात्तस्य सेति कर्तृपदस्य क्रियाकाङ्क्षाऽनिवृत्तेश्च, अयं च दुर्गभाष्यानुवादः । अस्यायमर्थः । हि यतः सा दक्षिणोत्सृज्यमाना यजमानेनोत्सृष्टा सती दक्षिणस्यां दिशि वेद्याः श्रोणौ गच्छतीति दक्षिणेत्युच्यते । कथं (केन प्रदेशेन) गच्छतीत्याह—**अग्रेणेत्यादि** । गृहपतिर्यजमानस्तेन संयुक्तो गार्हपत्योऽग्निः "गृहपतिना संयुक्ते ञ्य" (४–४–९०) इति ञ्यः प्रत्ययः । तमग्रेण गत्वा (पूज्यपूजकयोर्मध्ये प्राचीति व्यपदेशात्प्रत्यङ्मुखस्याग्नेः संमुखीनस्य प्राङ्मुखस्य यजमानस्य च मध्येनोत्तरपूर्वक्रमेणर्त्विग्गच्छतीति) सदः सदस्स्थानं तद् जघनेन मध्यप्रदेशेन, अवच्छेदकत्वं तृतीयार्थः । प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम् । अवच्छेदकताबुद्धिप्रकारत्वादिशंसतीति" हर्युक्तेः । अग्निमिन्धे दीपयतीत्यग्नीत् ञिइन्धी दीप्तौ (रु० आ०) क्विप् । तस्य स्थानमाग्नीध्रम् । "आग्नीधः शरणे रण्भं च (वा०) इति रण्णित्त्वादादिवृद्धिः । भत्वाज्जश्त्वाभावः । आग्नीध्रमेवाग्नीध्रीयम् स्वार्थेछः । तद्दक्षिणेनादूरे तस्य दक्षिणस्यां दिशि "एनबन्यतरस्यामदूरेऽपञ्चम्या" (५–३–३५) इति एनप् । "एनपा द्वितीये" (२–३–३१) ति द्वितीया अन्तर्वेदि वेद्यामध्ये स्थित्वा । अन्तरेणेत्येतद्विनाऽर्थकम् । चत्वालो गर्तविशेषः । उत्करः रक्षादिकूटः । "उत्करः कूटमस्त्रिया-"मित्यमरः । तावन्तरेण तौ विना (तौ परिहृत्य) "अन्तरान्तरेण युक्ते" (२–३–४) इतिद्वितीया । "पृथग्विनान्तरेणर्ते" इत्यमरः । तमाग्नीध्रं चेति, पृथग्वाक्यम् तमाग्नीध्रं ब्रह्माणं (तात्स्थ्यात्ताच्छब्ध्यमिति न्यायात्) च गच्छतीति दक्षिणेत्यपि द्रष्टव्यम् ॥

२. पृष्टः । प्रश्नोनुयोगः पृच्छा चेत्यमरः ॥

३. शीघ्रार्थे ऽयं पठितः । यो ह्युत्सहते स एव शीघ्रं कर्म कर्तुं प्रभवति । इति शीघ्रार्थस्याप्यत्रोत्साहार्थे वृत्तिः ॥

---

1 तथाच तस्याग्रेण सदसो मध्येनेति फलितोऽर्थः । अग्रावच्छेदेन गार्हपत्यं, मध्यावच्छेदेन सद इत्यक्षरार्थः । उपपदविभक्तीनां सम्बन्धोऽर्थः षष्ठ्यपवादत्वात् । उत्सर्गसमानदेशा ह्यपदा भवन्तीति महाभाष्यकृतः प्राहुः ॥

**दाशतेर्वा स्याद्दानकर्मणः ॥ १५ ॥**

दानकर्मणः दानार्थस्य । दाशृ दाने ( भ्वा. उ. ) दाश्यतेऽनेनेति दक्षिणः । पृषोदरादिः ॥ तेनैव हि प्रायेण दीयते ॥ हस्तशब्दं निर्वचनप्रसक्तं निर्ब्रवीति—

**हस्तो हन्तेः ॥ १६ ॥**

हन्त्यनेनेति हस्तः । पृषोदरादिः । तेन हि हन्यते । यद्यप्यन्येनापि हन्यते पादादिना, तथापि यो हन्तव्यो भवति तस्य—

**प्राशुर्हनने ॥ १७ ॥**

हननेऽयमेव प्राशुः शीघ्रः । झटिति समुद्यच्छमानो भवति ॥

तदेतन्निगमस्थं दक्षिणामघोनीति प्रतीकमुपादाय व्याख्यातमिदानीं शिक्षास्तोतृभ्य इति तदुत्तरं वाक्यं व्याचष्टे—

**देहि स्तोतृभ्यः कामान् ॥ १८ ॥**

इति । एवमुत्तरोत्तरम् । मातिधगिति व्याचष्टे—

**मास्मानतिहाय दंहीः ॥ १९ ॥**

अस्मानतिहायातिक्रम्य ( अन्येभ्यो ) मा दंहीर्मा देहि । दहिरत्र दानार्थ इति विवरीतुमाह—

**मास्मानतिहाय दाः ॥ २० ॥**

अस्मानतिहायातिक्रम्य मा दाः मा देहि । "माङि लुङ्" (३-३-१०५) सर्वलकारापवाद इति लोडर्थेऽत्र । "न माङ्योग-" ( ६-४-९७ ) इत्यडभावः ॥

**भगो नो अस्तु बृहद्वदेम ॥ २१ ॥**

इत्येतन्निगदव्याख्यातम् ( ३७ पृ० ) । विदथे इति निगमस्थपदमर्थतोऽनुवदति—

**स्वे वेदने ॥ २२ ॥**

स्वे-स्वीये ( आत्मीये ) वेदने विन्दते लभते सुखमस्मिन्निति वेदनं गृहम् । विद्लृ लाभे ( तु. उ. ) "करणाधिकरणायोश्च" ( ३-३-११७ ) इति ल्युट् ॥

सिंहावलोकितकेन निगमप्रसक्तं भगपदं निर्ब्रवीति—

**भगो भजतेः ॥ २३ ॥**

भगशब्दः पुल्लिङ्गो धनवचनः । भज्यते सेव्यते भोगार्थिभिः । यद्वा भज्यते सेव्यतेऽनेन हेतुना तद्वान् ( धनवान् ) भज सेवायाम् ( भ्वा. उ. ) "पुंसि संज्ञाया-" ( ३-३- ११८ ) मिति घः । "चजो" ( ७-३-५२ ) रिति जस्य गः ।

बृहत्पदं व्याचष्टे—

**बृहदिति महतो नामधेयम् ॥ २४ ॥**

नामधेयं नामैव भवति । "वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्चे-"(उ. २. ७७) ति निपातोऽयम्[1] ॥ "भागरूपनामभ्यो धेय-"( वा० ) इति स्वार्थे धेयप्रत्ययः ॥

---

१. बृहन्महच्छन्दो ॥

कुत एतत्? इति महतो नामधेयत्वे निदानप्रश्ने आह—

**परिवृढं भवति ॥ २५ ॥**

परितः सर्वतो वृढं व्याप्तम्। यद्वा परिवृढं व्याप्तं यद्धि महद्भवति तत्सर्वं व्याप्नोति। तथाच वक्ष्यति "ब्रह्मपरिवृढं सर्वत"इति ( निरु. १-३-३ ) इदानीं निगमान्तस्थं सुवीरा इत्येतद्वाक्यमर्थतो द्विधा व्याचष्टे—

**वीरवन्तः । कल्याणवीरा वा ॥ २६ ॥**

पुरस्तात्स्थितेन मत्वर्थसुना योऽर्थो लभ्यते सहि वीरवन्त इत्यनेनोच्यते । तत्रान-तिप्रसिद्धत्वमाशङ्क्य प्रसिद्धेन शोभनार्थेन बहुव्रीहिणा योऽर्थो लभ्यते तमर्थमाह कल्याणवीरा वेति । कल्याणशब्दार्थो वक्ष्यते मूले ( नि. २-१-६ ) ।

इदानीं निगमान्तस्थं वीरपदमनेकधा निर्वक्ति—

**वीरो वीरयत्यमित्रान् ॥ २७ ॥**

अमित्रान् शत्रून्वीरयति विविधप्रकारमीरयति । क्षिपति । कम्पयति । मारयति वेति वीरः । ईर क्षेपे ( चु. प. ) स्वार्थणिजन्तात्पचाद्यच् । यद्वा ईर गतौ कम्पने च ( अ. आ. ) अन्तर्भावितण्यर्थात्पचाद्यच् । अमित्रशब्दः पुंसि । तथाच (पा.लि.) सूत्रम् "भृत्रा-ऽमित्र-छात्र-पुत्र-मन्त्र-वृत्र-मेढ्रो-ष्ट्राः पुंसी"ति ॥

प्रकारान्तरेण वीरशब्दं साधयति—

**वेतेर्वा स्याद्गतिकर्मणः ॥ २८ ॥**

गतिकर्मणो गत्यर्थेवर्त्तमानस्य वीधातोः ( अ. प. ) औणादिको रक् ॥ गच्छत्ये-वासावभिमुखं शत्रून् ॥

**वीरयतेर्वा ॥ २९ ॥**

विक्रान्त्यर्थकस्य वीरधातोः ( चु. आ. ) विक्रान्तो विक्रम-(पराक्रम-) वानसौ भवति ॥

**सीमिति परिग्रहार्थीयो वा पदपूरणो वा ॥ ३० ॥**

परि सर्वतो ग्रहणं ज्ञानं परिग्रहः स अर्थो यस्य स परिग्रहार्थः स एव परिग्रहा-र्थीयः स्वार्थे छः । सर्वत इत्यर्थकः । तद्यथा—

**प्रसीमादित्योऽअसृजत् ॥ ३१ ॥** ( ऋ. सं. २-७-९-४ )

---

१. विषयत्वं सप्तम्यर्थः ॥

२. परिवृळ्हम् इति मूलपुस्तके पाठः ॥ यद्यपि पाणिनिना प्रभावेव परिवृढ इति ( ७-२-२१ ) निपातितस्तथापि अर्थसाम्यादिह महतो नामधेयनिदाने निरुक्तः । प्रभुरपि महत्तया सर्वं पोष्यवर्गं व्याप्नोत्येतावतैव परिवृढ इत्युच्यते ॥

३. मत्वर्थसोः पुरस्तात्प्रयोगस्य लोके सर्वथाऽभावो वेदेऽपि क्वाचित्कत्वमेवेति ।

४. प्रसीमादित्योऽअसृजद्विधर्ताँ ऋतं सिन्धवो वरुणस्य यन्ति । न श्राम्यन्ति न विमु-ञ्चन्त्येते वयो नपप्तू रघुया परिज्मन् ॥ ४ ॥ विधर्ता विविधप्रकारेण रसानां रश्मीनां वा

गृत्समदस्येदमार्षं त्रिष्टुप्सौरी । अस्यामेव ऋचि तावदुभयमपि प्रदर्शयति—

**प्रासृजदिति वा प्रासृजत्सर्वत इति वा ॥ ३२ ॥ इति ॥**

तत्रायस्य प्रासृजत्सूर्यो रश्मीनित्यर्थः । सीमिति पदपूरण एव ॥ कुतोऽपीत्यविवक्षितमेवैतत्पक्षे । द्वितीयोदाहरणे सीमित्यस्यार्थः सर्वत इति ॥

परिग्रहार्थीये उदाहरणान्तरमप्याह—

**विसीमतः सुरुचो वेन आवः ॥ इति च ॥ ३३ ॥** (य. वा सं. १३-३)

---

स्वरश्मिजालान्तर्गतस्य सर्वस्य जगतो वा, धर्ता धारयिता । "अणोऽप्रगृह्यस्य" (८–४–५७) त्यनुनासिकः । आदित्य अदितेरपत्यं पुमान् विवस्वान् । प्रासृजत्प्रकर्षेण सृष्टवान्सर्वतोरश्मीन् इति शेषः । (ते च सूर्यरश्मयः) सिन्धवः स्यन्दमाना (आदित्यमण्डलात्प्रोक्षो वर्तमाना) ऋतमुदकम् (आदाय पृथिवीलोकादन्तरिक्षलोकाच्च) वरुणस्य सूर्यस्य (मण्डलं) यन्ति गच्छन्ति । (तदेवमुत्सर्गादानलक्षणं स्वस्वकर्म कुर्वाणा अपि) न श्राम्यन्ति न (वा श्रान्ता अपि सन्तो विरागादप्येतत्कर्म) विमुञ्चन्ति एते (कथंपुनः पतन्तो न श्राम्यन्ति? किं शनकैः? न) वयो न वयः पक्षिण इव (शीघ्रं) पप्तुः पतन्तः रघुया लघुया (लघ्व्या) शीघ्रिकया गत्या परिज्मन् परिजमन्तः परिगच्छन्तः सर्वमप्येतज्जगत् ॥ इत्यर्थः ॥

१. सूर्यो ह्यस्यां वरुणनाम्ना स्तूयते सोऽप्यदितेः पुत्र इत्यादित्य एव ॥

२. प्रथमम् । ततः परिग्रहार्थीयत्वे द्वितीयमुदाहरणमनुपदं वक्ष्यति ॥

३. ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ३ ॥ ब्रह्म बृहत् रुक्मारूपमादित्याख्यं प्रथममादौ पुरस्तात् (प्राच्यांदिशि) जज्ञानं जायमानं दृश्यमानमिति यावत् । जनेः शानचि शपः श्लौ द्वित्वम् । गमहने–(६–४–९८) त्युपधालोपः । किंच वेनः कमनीयो मेधावी वा स आदित्यः । सुरुचः प्रशस्तरोचनात् रश्मीन् सीमतः सर्वतः वि आवः व्यवृणोत् विवृतानकरोत् । छन्दसि परेऽपि व्यवहिताश्चेति (१–४–८२) विशब्दस्य पुरस्तात् प्रयोगो व्यवहितस्य । सचार्थकाले आवरितिक्रियापदेन संबध्यते उपसर्गत्वात् । उपसर्गाः क्रियायोग (१–४–

---

1. सायणस्तु विधर्त्ता सेतुरिव जलस्य धारयिता आदित्यः । अदितेः पुत्रो वरुण ऋतं विधारणहेतुभूतं सत्यं यद्वा नदीनामुपादानभूतमुदकं सीं सर्वतः प्रासृजत्प्रकर्षेण सृष्टवान् । तेन वरुणस्यर्तेन सिन्धवः स्यन्दनशीला नद्यो यन्ति गच्छन्ति प्रवहन्ति । एते सिन्धवः न श्राम्यन्ति न प्राप्नुवन्ति न विमुञ्चन्ति नोपरता भवन्ति । अनलसाः सर्वदैकरूपेण प्रवहन्तीत्यर्थः । एतदेवोच्यते । वयो न वयः पक्षिण इव रघुयाः लघुवर्गाः शीघ्रगामिनः परिज्मन्परिज्मनि भूम्यां पप्तुः पतन्ति गच्छन्ति ॥ इत्येवं व्याख्यत् ॥ अत्र सुपां सुलुगिति केर्लुक् ॥

2. ते हि वर्षाकाले मेघद्वारा स्यन्दन्ते । तएवच सूर्येण प्रसृष्टाः सार्वलौकिकमुदकमादाय पुनः सूर्यमण्डलं प्रविशन्ति ॥

3. लडर्थे लिट्छन्दसि तनिपत्योश्छन्दसी (६–४–९९) त्युपधालोपः ॥

4. सुपां सुलुगि–(७–१–३९)ति डादेशे या । सायणमते जसः स्थाने ॥

5. तदुक्त्योपलक्षितमेव प्राच्याः प्राचीत्वम् ॥

वामदेवपुत्रो नकुलोऽनया त्रिष्टुभाऽऽदित्यं तुष्टाव ॥ तदेतत्प्रदर्शयन्नर्थतः—

**व्यवृणोत्सर्वत आदित्यः ॥ ३४ ॥**

व्यवृणोदिति-वि आवरित्यस्यार्थः । सीमत इत्यस्य सर्वत इति ॥

किं व्यवृणोदित्यपेक्षितमर्थतो निर्दिशति—

**सुरुच आदित्यरश्मयः ॥ ३५ ॥**

आदित्याख्यस्य ब्रह्मणो रश्मयः किरणाः । किरणप्रग्रहौ रश्मी इत्यमरः । त एव सुरुचस्तानित्यर्थः । कुतस्ते सुरुचः? इति सुरुच्शब्दं निर्ब्रवीति—

**सुरोचनात् ॥ ३६ ॥**

तथाच सुरुचः प्रशस्तरोचनान्रश्मीनित्यर्थतो गम्यते । रुच दीप्तौ ( भ्वा. आ. ) क्विप् वेनो मेधावी ॥

अथ परिग्रहार्थीयस्य सीमिति मान्तस्य कथं सीमत इत्यकारान्तमुपादाय तसिना सीमत इति साधितमित्यनुयुक्त उत्तरमाह—

**अपिवा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणं सीम्नः सीमतः सीमातो मर्यातः ॥ ३७ ॥**

अत्र अपिवेति भिन्नक्रमः सीम्न इत्यतः प्राग्द्रष्टव्यः । सीम् अ इत्येतदनर्थकमुपबन्धं संज्ञाकरणम् ( अकारम् ) आददीतार्थकाले । पञ्चम्याः कर्म कार्यं "पञ्चम्यास्तसिल्" ( ५–३–७ ) इति तसिल्प्रत्ययरूपं यस्मात्पुरस्तथाभूतम् । तथाच सीमित्ययं सर्वशब्दसमानार्थ एव पर्यवसन्नो भवतीति व्याख्यातं सीमतः सर्वत इति ॥

---

५९ ) इति पाणिनिसरणात् किंच उपमा उप समीपे मान्ति भूतानि यासु ताः सावकाशा अतएवास्य जगतो विष्ठाः विविधं तिष्ठन्ति यासु ता विविधस्थानभूता "अम्बाम्बगोभूमी (८–३–९७) त्यादिना षत्वम् । एवंभूता बुध्न्या बुध्नमन्तरिक्षं तत्र भवा दिशः विवः व्यवृणोत् । किंच सतोऽभिव्यक्तस्य स्थूलस्यासतोऽनभिव्यक्तस्य सूक्ष्मस्य च मूर्त्तस्य घटपटादेरमूर्तस्य वाय्वादेश्चेति वा योनिं प्रभवं विवः व्यवृणोत् । वृणोतेर्लङि शपि लुप्ते गुणे च व इति रूपमडभाव आर्षः । बहुलं छन्दस्यमाङ्योगेऽपीति ( ६–४–७५ ) वचनात् ॥

१. उपक्रान्तं सीमित्यस्य परिग्रहार्थीयत्वम् ।

२. अनुबन्धमिवोच्चारणकाले प्रयोजनवशादुपबध्यमानम् । संज्ञाकरणं संज्ञात्वप्रयोजकम् ॥

३. अवधिविशिष्टो हि सर्वार्थः सीमशब्देन विवक्षितस्ततस्तसिनाऽवध्यर्थेऽभिहिते सर्वार्थ एवावशिष्यते । विशिष्टवाचकपदानां विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमिति नियमात् । अत्र पदं शक्तं ननु सुप्तिङन्तं पदमिति ( १–४–१४पा० ) परिभाषितम् ॥

४. मन्त्रार्थकरणकाले दुर्गोक्ति मूलोक्ति चानुसृत्यैतद्व्याख्यानम् महीधरमते तु मर्यादार्थस्यैवेदमुदाहरणं सीमतः सीमानं मर्यादां भूगोलमध्यभागमारभ्येति तदर्थं स आह । एतदेवात्र द्वितीयोदाहरणदानस्यास्वरसमूलमपिवेत्यनेन सूचितं पूर्वोदाहरणस्यैवोभयार्थविषयत्वमिति राद्धान्तः ॥

इदानीं शब्दसारूप्यप्रसक्तं निर्ब्रवीति-सीम्नस्सीमत इति । अपिवा-अथवा ग्रामादेर्मर्यादार्थस्य नान्तस्य सीमन्शब्दस्यापि पूर्ववत्तसिलन्तस्य "स्वादिष्विति (१-४-१७)" पदत्वान्नलोपे सीमत इति संभवतीत्याह—**सीमातो मर्यादात इति** । अत्र द्वितीयान्तात्सार्वविभक्तिकस्तसिरिति महीधरः स्वरसः ।

इदानीं निर्वचनप्रसक्तं सीमाशब्दार्थं निर्ब्रवीति—

**सीमा मर्यादा विषीव्यतिदेशाविति ॥ ३८ ॥**

सीमन्शब्दो मर्यादार्थः । कुतः ? देशौ पूर्वापरौ विषीव्यति विगतसन्तानाववच्छिन्नौ ( विभक्तौ ) करोतीति हेतोर्मर्यादा सीमेत्युच्यते । तथाच 'सीमसीमे स्त्रियामुभे' इत्यमरव्याख्यायां महेश्वरः द्वे ग्रामादेर्मर्यादायामित्याह "सीमा घाटस्थिति क्षेत्रेष्वण्डकोशेषु च स्त्रिया"मिति मेदिनीच । स्थितिरत्र मर्यादा "मर्यादा धारणा स्थितिरि" त्यमरः । अयं चार्थतो निर्वचनक्रमः । सीमेति तु षिञ् बन्धने (स्वा. उ.) इत्यस्य "नामन्सीमन्नि"त्यादिना ( उ० ४-१४० ) मनिनन्तो निपातः । सिनोति बध्नाति देशावेतावानेवायमित्येवं सा सीमा ॥

**त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम् ॥ ३९ ॥**

निपातत्वेनैतदपि संदिह्यते । वक्ष्यति हि निपात इत्येक ( नि. १-३-३ )इति ॥ अतस्त्व इति ह्येवं निपातकाण्ड उदाहियते । संशयपरिशोधनाय त्व इत्येतद्विनिग्रहार्थीयमिति व्याख्यातम् । स्वरविप्रतिपत्तिं निराकरोति—**अनुदात्तमिति** । "त्वत्त्वसमसिमेत्यनुच्चानीति" ( फि. ४-७८ ) सर्वानुदात्त इत्यर्थः ॥

**अर्धनामेत्येके ॥ ४० ॥ २ ॥**

अर्धस्यैवैतन्नाम त्व इत्येवमेके आचार्या मन्यन्ते इति शेषः । वक्ष्यति चायमपि । त्वो नेम इत्यर्धस्य ( निरु. ३-४-१ ) इति । तदेतत्प्रकरणोपपदाभ्यामध्यवसेयं, क्वार्धनाम, क्व सर्वनामेति ॥ २ ख. सू. ॥

यथात्र सर्वनाम तथेयमुदाहियते—

**ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्वरीषु ॥**
**ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ॥ १ ॥**
( ऋ. सं. ८-२-२४-११ )

आङ्गिरसस्य बृहस्पतेरार्षम् । त्रिष्टुप् । अनया हि बृहस्पतिर्वेदितवेदार्थज्ञानं तुष्टाव ॥ अथास्यामृच्येकशब्दसमानार्थं त्वशब्दं दिदर्शयिषुरनया कर्तव्यं तावदाह—

**इत्यृत्विक्कर्मणां विनियोगमाचष्टे ॥ २ ॥**

अयमर्थः । होत्रादयः षोडशर्त्विजो भवन्ति । ससदस्याः सप्तदश । तेषु चत्वारो महार्त्विजः । होता, उद्गाता, ब्रह्मा, अध्वर्युश्चेति । तेषां होत्रादीनां चतुर्णामृत्विजां यानि कर्माणि ऋक्शंसनादीनि तेषां विनियोगं विविच्य नियोगं नियोजनम् ( कर्तृपुरुषेष्वासञ्जनम् ) इति-अनयर्चाऽऽचष्टे ब्रवीति, ॥

कथम्-इति प्रथमं पादं विवृणोति-

१. निपातत्वे हि निपाता आद्युदात्ताः (फि० ४-८०) इत्याद्युदात्तत्वं प्रसज्येत ॥

**ऋचामेकः पोषमास्ते पुपुष्वान्होतर्गर्चनी ॥ ३ ॥**

य एते चत्वारो महर्त्विजस्तेषां मध्ये एको होता यज्ञकाले स्वकीयवेदगतानाम् ऋचां पोषं यथाविधिकर्मणि प्रयोगं पुपुष्वान् ( एको धातुरनुवादार्थः ) बह्वीर्ऋचः पुष्यन् शंसन् आस्ते । इतीयमृक् अर्चनी । अर्च्यते स्तूयतेऽनयेति करणे ल्युट् ( ३-३-११७ ) टित्वान्ङीप् ऋच् स्तुतौ ( भ्वा. प. ) तदेतदृक्शंसनैकर्म होतरि विनियुक्तम् । उक्तंच "यदृचैव होत्रं क्रियत"इति ( ऐ० ब्रा ५-५-८ ) ॥ अथ द्वितीयं पादं विवृणोति—

**गायत्रमेको गायति शक्करीषूद्गाता ॥ ४ ॥**

एक उक्तादन्य उद्गाता । गायत्र गायत्रशब्दाभिधेयं स्तोत्रं साम, शक्करीषु शक्करीशब्दाभिधेयासु ऋक्षु गायति इत्येतत्सामगानकर्मोद्गातरि नियुक्तम् । उक्तंच "साम्नोद्गीथ"मिति ( ऐ. ब्रा. ५-५-८ ) ॥

अथ मन्त्रार्थे पादशोऽग्रे निर्विवक्षुरुक्तार्थर्चे एकपदनिरुक्तं तावदाह—

**गायत्रं गायतेः स्तुतिकर्मणः ॥ ५ ॥**

स्तुत्यर्थस्य गैधातोः ( निघ. ३-१४ ) ( भ्वा. प. ) करणे पत्रन् । गायत्यनेनेति गायत्रम् ॥

**शक्कर्य ऋचः शक्नोतेः ॥ ६ ॥**

शक्लृ शक्तौ ( स्वा. प. ) अस्माद्बाहुलकात्करणे वनिपि "वनोर च" ( ४-१-७ ) इति ङीब्रादेशश्च । शक्नोत्याभिरिति शक्कर्यः ।

---

१. विनिग्रहार्थीयस्य सर्वनाम्नस्त्वशब्दस्यार्थनिर्देशोऽयम् ॥ प्रथम इत्यर्थः । तथा चोक्तम् । एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायां च प्रयुज्यत इति ॥

२. पुनः पुनर्भृशं वा देवतायाथात्म्यानुचिन्तनसन्तानमर्मस्थानकरणानुप्रदानवतीर्यथाकालमृचोऽधीयान इति दुर्गः ॥

३. अयमर्थः सायणेनोक्तस्तथाच पुपुष्वानिति क्वस्वन्तः । धातुसंबन्धे प्रत्ययाः ( ३-४-१ ) इति वर्तमाने लिट् । लिटः कानज्वा+क्वसुश्च ( ३-२-१०७ ) इति क्वसुः । लिटि धातो-( ६-१-८ ) रिति द्वित्वम् । पुष पुष्टौ ( दि० प० ) पोषमिति णमुलन्तम् । स्वेपुष ( ३-४-४० ) इति णमुल् बाहुलकादनुपपदेऽपि । अतएव कषादिषु यथाविध्यनुप्रयोग इति पुषेरेवानुप्रयोगः ॥ शंसन् स्तुवन् शंसु स्तुतौ ( भ्वा० प० ) लटः शतरि रूपम् ॥ धातूनामनेकार्थत्वाद्दैवादिकस्य पुष्ट्यर्थस्य पुषेरत्रशंसत्यर्थे वृत्तिः । ऋग्भाष्यभूमिकायां सायणस्तु पोषमास्ते पुपुष्वानित्यस्य पुष्टिं कुर्वन्नास्त इत्यर्थमाह । भिन्नप्रदेशेष्वाम्नातानामृचां संघमेकत्र संपाद्यैतावदिदं शस्त्रमिति कूर्सिं करोति सेयं पुष्टिरिति च व्याचष्ट । ऋक्शब्दोऽपि तेनैव तत्र व्युदपाद्यत "अर्च्यते प्रशस्यतेऽनया देवविशेषः क्रियाविशेषस्तत्साधनविशेषो वेत्यृक्" इत्येवम् ॥

४. एतत्तादृगध्ययनकर्म तस्मिन्होतरि विनियुक्तम् ॥

अथैतस्मिन्नर्थे निगमं प्रमाणयञ्छक्करीशब्दे श्रुतिं दर्शयति—

**तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्करीणां शकरीत्वमिति विज्ञायते ॥७॥**

यद्यस्मादाभिरभिष्टुत इन्द्रो वृत्रमसुरं हन्तुमशकत् तत्तस्माच्छक्करीणामृचां शक्करीत्वमित्येवमैन्द्रब्राह्मणेऽपि ( ५–२–२ ) शक्नोतेरेव शक्वर्य इति विज्ञायते । लिङ्गतोऽपि हि दर्शितं भवति आख्यातजानि नामानीति ॥

अथ तृतीयमुक्तमन्त्रपादमर्थतो व्याचष्टे—

**ब्रह्मैको जातेजाते विद्यां वदति ॥ ८ ॥**

एकोऽपरो ब्रह्मा नाम ऋत्विक् । जातविद्यामिति वीप्सागर्भं सप्तमीतत्पुरुषमार्षविज्ञानबलान्मत्वा व्याचष्टे–जातेजाते[3] भृशमुत्पन्ने प्रायश्चित्तादौ कर्तव्ये कर्मणि । विदन्त्यनयेति विद्या विद् ज्ञाने (दि० आ०) "संज्ञायां समजे"त्यादिना (३–३–९९) करणे क्यप् । तां वेदयित्रीं वाचमिति सायणः । विद्यात्रयहेतुत्वादात्मनो विज्ञानमिति दुर्गः । वदतीतरेभ्य ऋत्विग्भ्य"इदमत्र कुरुते"–ति ॥ तत्रापि ह्येतत्कर्म विनियुक्तम् ॥

अथ ब्रह्मैव कुतो विद्यां वदतीत्यनुयुक्तस्तस्य विद्याप्रकर्षात्सर्ववेत्तृत्वमाह—

**ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति ॥ ९ ॥**

नह्यसर्ववित्तमधिकारं निर्वर्तयितुं शक्नुयाद्यतो ह्ययं सर्वविद्यः । सर्वां (त्रयीं) विद्यां वेदेति "तद्धितार्थे-" (२–१–५१) ति समासः । "तदधीते तद्वेदे–" ( ४–२–५९) ति हि वेदार्थे विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम् ( ४–२–६० वा० ) इति ठक् । तस्य "सर्वादेः सादेश्च लुग्वक्तव्यः" (वा. ) इति लुक् । तथाविधो ह्यसावधिकारी त्रयीविद्यासंयुक्तो येनासौ सर्वमेव वेदितुमर्हति अतोऽयं ब्रह्मा भवति । उक्तंच "अथ केन ब्रह्मत्वं क्रियते इति? त्रय्या विद्यया" ( ऐ० ब्रा० ५–५–८ ) ॥

---

१. अथवात्र यत्तच्छब्दाभ्यां धात्वर्थः शक्तिरुच्यते । इन्द्रगता हि सा शक्करीद्वारेति तासां करणत्वोपपत्तिः । यत्तासामभिष्टुतिद्वारा शक्तिजनकत्वं तदेव शक्करीत्वमिति पर्यवसितोऽर्थः । शक्तिजनकत्वं शक्तिजनकस्य भावः सच प्रकृतिजन्यबोधे प्रकारीभूतो भवति । तथा च शक्तिजनक इत्यस्मिन्नर्थे शक्तिरेव प्रकार इति ॥

२. शब्दसामर्थ्यं हि लिङ्गं मीमांसायां प्रसिद्धम् ॥

३. ऋग्भाष्यभूमिकायां सायणस्तु जातेजाते तदातदोत्पन्ने प्रस्तुते प्रणयनादिकर्मणि विद्यामनुज्ञां वदति । ब्रह्मन्नपः प्रणेष्यामीत्येवं संबोधितः सन् ओंप्रणयेत्यनुजानाति स च ब्रह्मा वेदत्रयोक्तसर्वकर्माभिज्ञः ॥ तस्माद्योग्यतां दृष्ट्वा तत्तदनुज्ञातुं सति प्रमादे समाधातुं च समर्थ इति । तच्च सामर्थ्यं छन्दोगा आमनन्ति "एष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गातान्यतरामिति कृत्स्नो यज्ञः प्रमादराहित्याय मनसा सम्यगनुसन्धेयः वाचा च वेदत्रयोक्तमन्त्राः पठनीयास्तत्र होत्राध्वर्य्वाद्यो मिलित्वा वाग्रूपं यज्ञमार्गं संस्कुर्वन्ति ब्रह्मा त्वेकएव मनोरूपं यज्ञमार्गं कृत्स्नमपि संस्करोति तस्मादस्यास्ति सामर्थ्य"मिति ॥

**ब्रह्मा परिवृढः श्रुततः ॥ १० ॥**

श्रूयत एव ( न परं केनचित्क्रियते- ) इति श्रुतो वेदः । कर्मणि क्तः । तस्मादिति "पञ्चम्यास्तसिल्" ( ५-३-७ ) । परिवृढः प्रभुस्तेषां मध्ये नेता ( नायकः ) "प्रभौ परिवृढः" (७-२-२१) इति निपातः । "प्रभुः परिवृढोऽधिप" इत्यमरश्च । स हि त्रयीविद्यां वेद । अन्ये त्वेकैकामित्यस्य विद्याप्रकर्षोऽन्यतः ।

अधुना शब्दसारूप्यप्रसक्तमुच्यते—

**ब्रह्म परिवृढं सर्वतः ॥ ११ ॥**

सर्वतः सर्वासु दिक्षु । "आद्यादिभ्यस्तसेरुपसंख्यानमि"ति ( वा० ) सार्वविभक्तिकस्तसिः । ब्रह्म वेदान्तप्रतिपाद्यमृगादि वोभयमपि एतत्परिवृढं व्याप्तम् ॥

अथ तुरीयपादं तस्या अर्थतो व्याचष्टे—

**यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युः ॥ १२ ॥**

एकोऽध्वर्युश्च यज्ञस्य मात्रां मीयतेऽनेनेति मात्रा[1] तां यां कांचिदिति कर्तव्यतामभिषवग्रहणादिरूपां ( यज्ञशरीरं ) विमिमीते अत्यर्थं ( नानाप्रकारं ) निर्मिमीते ( करोति ) । उ इत्यवधारणार्थो मन्त्रे । स्वस्वकर्तव्यमेव सर्वोऽनुतिष्ठति नान्यकर्तव्यमित्यवधारणा । यद्वा वितर्कार्थः । सच सुगम इति कृत्वा व्याख्याकाले उपेक्षितः ॥ यज्ञस्वरूपनिष्पादकत्वं चाध्वर्योर्नामनिर्वचनादेवावगम्यत इत्यध्वरशब्दमनेकधा निर्ब्रवीति—

**अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताऽध्वरं कामयत इति वा ॥१३॥**

अध्वरशब्दे पृषोदरादित्वादन्त्यलोपेऽध्वरयुरेवाध्वर्युरित्युच्यते । कथं सोऽध्वरयुरिति तत्साधयत्यवयवार्थनिर्वचनेन । अध्वरं यज्ञं युनक्ति सर्वाङ्गसंवननेन संयोजयतीत्यध्वरयुः । युजिर् योगे ( रु. प. ) डुप्रत्यय औणादिकः । यतः सोऽध्वरस्य नेताऽन्तं प्रापयितेति, अध्वर्युशब्दस्यैव तात्पर्यार्थोऽयमिति सायणः । एतदेवाभिप्रेत्याध्वर्युवेदस्य (यजुषः) यागनिष्पादकत्वद्योतकं निर्वचनं यास्को दर्शयिष्यति "मन्त्रा मननात् । छन्दांसि छादनात् । स्तोमः स्तवनात् । यजुर्यजतेरिति" ( नि० ७-१३ ) अथवा अध्वरं कामयते कर्तुमित्ययमध्वर्युः । एतस्मिन्निर्वचने युरित्ययं कामनार्थः । वसुकामा वसुयव इति यथा ॥

**अपिवाऽधीयानेयुरुपबन्धः ॥ १४ ॥**

अथवा अध्वर- ( न्तत्प्रतिपादकं शास्त्र- ) मधीयानो लक्षणयाऽध्वर इत्युच्यते । मञ्चाः[2] क्रोशन्तीतिवत् । तस्मिंश्चाधीयाने ब्राह्मणे युरित्ययमुपबन्धो नामकरणम् । अध्वरमधीते यस्तस्य नामाध्वर्युरिति ॥ अकारलोपः पृषोदरादित्वादत्रापि ॥

---

१. मीयते इति मानं कर्म तन्मात्रेत्युच्यत इति दुर्गः ॥

२. मञ्चस्थेषु पुरुषेषु क्रोशत्सु मञ्चाः क्रोशन्तीति यथोच्यते तथात्राध्वरमधीयानोऽध्वर्युनाम्ना व्यपदिश्यते ॥

अथ विग्रहप्रसक्तस्याध्वरशब्दस्य तत्त्वमाचष्टे—

**अध्वर इति यज्ञनाम ॥ १५ ॥**

कथम्—?

**ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः ॥ १६ ॥**

हिंसाकर्मा हिंसार्थकः (निघ० २–१९) ध्वरधातुः । तस्मा"द्धलर्थे कविधानमि"ति अधिकरणे कः । ध्वर्यन्ते बध्यन्तेऽस्मिन्निति ध्वरस्तत्प्रतिषेधो न ध्वरोऽध्वर इति । अहिंस्रो हि यज्ञः । यत्किंचित्पशुबीजादिकमत्र हिंस्यते साऽभ्युदयहेतुत्वात्तेषां हिंसा न भवति । द्वेषपूर्वको हि प्राणिवधो हिंसा । न तथात्रेति भवति सोऽध्वरः । तथाच श्रुतिः "न वा उ एतस्मिन्म्रियसे" ( य० वा० सं० २३–१६ ) इति । स्मृतिश्च "कुशलमिच्छन्ति तृणानि राजन्" इति ॥

**निपात इत्येके ॥ १७ ॥**

अयं त्वशब्दो निपात इत्येके आचार्या मन्यन्ते ॥

एवंसति पूर्वाभ्युपगतेऽनुदात्तत्वे ( नि. १–३–२ ) शङ्कते—

**तत्कथमनुदात्तप्रकृति नाम स्यात् ॥ १८ ॥**

तदेतत्त्वेतिशब्दस्वरूपमनुदात्तस्वभावं सत्कथं नाम स्यात् । ( यद्भवतोक्तं सर्वनामानुदात्तमिति ) उत्तरमाह—

**दृष्टव्ययं तु भवति ॥ १९ ॥**

दृष्टानुविधिश्छन्दसि भवतीति दृष्टव्ययत्वान्नामेति तद्भवति । तुशब्दोऽत्र भेदार्थ उत्तरपक्षतां ध्वनयितुम् ॥ यद्वा हेतुसमुच्चयार्थ एव तुशब्दः । अयंभावः । यद्यपि "फिषोऽन्त उदात्तः"(फि० सू० १–१) इति फिट्सूत्रं फिषः प्रातिपदिकस्यान्तोदात्तत्वं विदधाति, "निपाताआद्युदात्ताः" ( फि० सू० ४–८० ) इतिचाद्युदात्तत्वं, तथापि "त्वत्त्वसमसिमे"त्यनुच्चानी (फि०सू०४–९)ति फिट्सूत्रं तदपवदति। तथा चापवाद-

१. किमयं रूढ एव घटपटादिवदुत योगार्थोऽप्यत्र कश्चिद्घटत इति प्रश्नः ॥

२. यद्वा ध्वरणं ध्वरो न ध्वरो यस्मिन्सोऽध्वरः । तत्प्रतिषेध इत्यस्य तस्य प्रतिषेधोऽस्मिन्निति बहुव्रीहिः ॥

३. निपातत्वं त्वेकेषां केषांचिन्मतं तत्तु विभक्तिदर्शनादेवापातरमणीयं वाङ्मात्रमिति कृत्वा नावधारितं, निपातत्वेनैतदपि सन्दिह्यत इति कृत्वा निपातकाण्डे उदाहृतः । इत्युक्तमधस्तात् ॥

४. दृष्टमनु यथा प्रयोगदर्शनं विधिर्विधानं छन्दसि भवतीति बाहुलकबलेन महाभाष्यकारः पतञ्जलिर्प्याह । अतएव दृष्टव्ययत्वं छन्दसः । व्ययो व्यत्ययो यथास्थितसामान्यनियमपरिवर्तनमिति यावत् । तथाचोक्तम् "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेनेति ॥ उपग्रहः परस्मैपदात्मनेपदे । नरः पुरुषः प्रथमादिः । स्वर उदात्तादिः । कर्तृशब्दः कारकमात्रपरः । तथाच तद्वाचकानां कृत्तद्धितानां व्यत्ययः । यङिति प्रत्याहारः । यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण ॥

स्वरणाव्ययदर्शनाच्च अनुदात्तमपि सदेतथामैव भवतीति ॥ वस्तुतस्तु । निपाता अप्याद्युदात्ता भवन्तीति (फि० सू० ४–११) कृतापवादत्वादृष्टाव्ययत्वाच्चना-मैवैतदित्युपपन्नमिति दुर्गः ॥

क्व पुनरस्य व्ययो दृष्ट इत्यपेक्षायामाह—

**उत त्वं सख्ये स्थिरपीतमाहुरिति द्वितीयायाम् ॥ २० ॥**

एकवचने व्ययो दृष्टः । त्वमित्ययमत्रोदात्तः सच निपातस्वरेणैव भवितुमर्हति । एवम्—

**उतो त्वस्मै तन्वं विसस्र इति चतुर्थ्याम् ॥ २१ ॥**

सर्वनामत्वान्ङेः स्मै (७–१–१४) ॥ मन्त्रार्थस्तु (नि. १–६–पा.) उपरिष्टा-द्व्याख्यास्यते ॥

**अथापि प्रथमाबहुवचने ॥ २२ ॥ ३ ॥**

व्ययो दृष्टः । स यथा–॥ ३ ॥

**अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ॥**
**आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे ॥ १ ॥**

(ऋ. स. ८–२–२४–७)

आङ्गिरसस्य बृहस्पतेरार्षं विद्यासूक्तं त्रिष्टुप् ॥ अक्षण्वन्त इत्यस्यार्थं निर्विवक्षु-राद्यपादमस्या अर्थतो व्याचष्टे—

**अक्षिमन्तः कर्णवन्तः सखायः ॥ २ ॥**

अक्षि विद्यते येषामित्यर्थे "तदस्यास्त्यस्मिन्निति (५–२–९४) मतुपि "छन्द-स्यपि दृश्यत (७–१–७६) इति अक्षिशब्दस्यानङि । अनो नुट् (८–२–१६) इति मतुपो नुडागमे अक्षण्वन्तः । लोके पुनरक्षिमन्तः । अक्षिसंयुक्ताः । एवं कर्ण-वन्तः कर्णबिललक्षणाकाशवन्तः । उपलक्षणमेतदन्येषामप्यङ्गानाम् । तथाच समाने-न्द्रियाः समानोदरपृष्ठपाणिपादाः । अतएव सखायः समानं ख्यानं (ज्ञानं) येषां ते बाह्येन्द्रियेषु समानज्ञाना इत्यर्थः ॥

अथात्रैकपदनिरुक्तम्—

**अक्षिचष्टेः ॥ ३ ॥**

पश्यत्यर्थस्य चक्षिङ्धातोः (अ. आ.) क्तिरौणादिकः । स्को (८–२–२९) रिति कलोपः । षस्य कत्वं सस्य षत्वं बाहुलकाच्चक्षिङः ख्याञ् (२–४–५४) इति

१. सर्वनामत्वेऽप्युदात्तत्वं छान्दसत्वाद्व्यत्ययं दर्शयति । यद्यपि तत्र त्वाङ्गशिटामदन्ता-नामिति (फि० सू० २ पा.) शिटः सर्वनाम्न आद्युदात्तत्वं विहितं तथापि तदौत्सर्गिकम् । त्वत्वसमसिमेत्यनुच्चानीति (फि० सू० ४ पा.) विशिष्यानुदात्तत्वविधानात् । विशेषवि-धिश्चौत्सर्गिकस्यापवाद एवेति सूपपादितं प्राक् ॥

२. उत त्वम् उतो त्वस्मै इत्येतद्वाक्य–(पाद–) घटितमन्त्रयोरर्थस्त्वित्यर्थः ॥

३. अनेकार्थत्वाद्धातूनां व्यक्तवागर्थकस्यापि पश्यत्यर्थकत्वम् ॥

च्छादेशाभाव इडभावश्च । चलोपश्च पृषोदरादित्वात् । च्छायते ( दृश्यते ) अनेन सर्वमित्यक्षि ॥

**अनक्तेरित्याग्रायणः ॥ ४ ॥**

व्यक्त्यर्थस्याञ्ज्धातोः ( रु. प. ) औणादिकः क्सिरनिदितामि-( ६-४-२४ ) ति नलोपः । चोःकु-(८-२-३०) रिति कुत्वं चर्त्वं सस्य षत्वं च अनक्ति व्यक्तं भवतीत्यक्षि । इति अग्रस्यापत्यमाग्रायणः "नडादित्वात् ( ४-१-९९ ) फक् । फस्यायन् ( ७-१-२ ) । आग्रायण आचार्यो मन्यते ॥ यद्यप्यङ्गान्तरमपि व्यक्तमेव भवति तथापीदं तैजसत्वादन्येभ्योऽङ्गेभ्यो व्यक्ततरं भवति ॥ अत्रार्थे श्रुतिं प्रमाणयति—

**"तस्मादेते व्यक्ततरे इव भवत" इति ह विज्ञायते ॥ ५ ॥**

यस्मादेते तेजोऽवयवभूयिष्ठे तस्मात्कारणादित्येवं तच्छब्दबलाद्यच्छब्दमध्याहृत्य व्याख्याक्रमो निरुक्तशास्त्रकृच्छैलीपरिशीलितोऽन्यत्रापि यथावसरमूह्यः । एते अक्षिणी इतरेभ्योऽङ्गेभ्यो व्यक्ततरे स्पष्टतरे ( प्रकाशतरे ) भवतः । अन्धकारेपि ह्येते प्रकाशेते एव नक्तंचरादीनां न तथेतराण्यङ्गानि । एवं ब्राह्मणेऽपि अनक्तेरेवाक्षिणी इति ह विज्ञायते ॥

**कर्णः कृन्ततेर्निकृत्तद्वारो भवति ॥ ६ ॥**

कृती च्छेदने धातोः ( रु. प. ) औणादिकोऽन्प्रत्ययः । गुणः । पृषोदरादित्वात्तस्य नः णत्वम् ॥ यद्वानिष्ठान्त एव पृषोदरादिः । उभयथापि निकृत्त ( छिन्न-) द्वार इति कर्णो भवति । गर्भावस्थायामेव केनापि निर्मितबिल इत्यर्थः ॥

**ऋच्छतेरित्याग्रायणः ॥ ७ ॥**

गत्यर्थस्य ऋधातोः ( भ्वा. प. ) औणादिकः कर्मणि नन्धातोः कुटागमश्च । गुणो णत्वं च ॥ ऋच्छन्ति ( गच्छन्ति ) शब्दा एताविति कर्णावित्येवमाग्रायणो मन्यते ॥ ब्राह्मणमप्येतस्मिन्निर्वचने प्रमाणयति—

**ऋच्छन्तीव खे उद्गन्तामिति ह विज्ञायते ॥ ८ ॥**

ऋच्छन्ती-( गच्छन्ती-) वैतौ खे आकाशेऽभिव्यक्ताः ( सन्तः ) शब्दाः । एतावपि च उद्गन्तां प्रत्युद्गच्छत इव ग्रहणाय । विचार्यमाणे ज्ञायते खे[2] कर्णाविति ॥

द्वितीयपादमर्थतो व्याचष्टे—

**मनसां प्रजवेष्वसमा बभूवुः ॥ ९ ॥**

एवंभूता अप्येते मनसां सुखाद्युपलब्धिसाधनेन्द्रियाणां[3]-( मन्तरिन्द्रियाणां ) प्रजूयन्ते गम्यन्तेऽत्रेति प्रजवा गम्यप्रदेशाः प्रज्ञायाः । जु इति सौत्रो धातुर्गतौ वेगे च

१. पाघ्राध्मेति ( ७-३-७८- ) ऋच्छादेशःशिति ( शपि ) परे विग्रहवाक्ये दर्शितः । एवमन्यत्राप्यूह्यम्

२. शरीरस्य शिरसो वा ऊर्ध्वं गते ( उच्चैः स्थिते ) स्थाने आकाशलक्षणे ॥

३. पुरुषभेदाद्बहुवचनम् । मनो हि प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं चेति न्यायविदो वदन्ति ॥

तस्मात्कर्मणि "ऋदोरप् ( ३-३-५७ ) इत्यप्प्रत्ययः । तेषु ( मनोगम्येषु ) असमा अतुल्या बभूवुः भवन्ति । छान्दसो लिट् ॥ केचिदूहापोहनधारणाप्रवक्तृत्वसमर्थाः । केचित्ततोऽनेल्पाः । केचित्स्वमेधस एव ॥

कथमसामान्यमिति तृतीयपादमर्थतोव्याख्यन्-दृष्टान्तेन प्रतिपादयति—

**आस्यदघ्ना अपर उपकक्षदघ्ना अपरे ॥ १० ॥**

आस्यं प्रमाणं येषां ते आस्यदघ्नाः "प्रमाणे द्वयसज्दघ्नञ्मात्रच" ( ५-२-३६ ) इति ऊर्ध्वमाने दघ्नच्प्रत्ययः । आस्यदघ्ना एव आदघ्नाः । पृषोदरादित्वादास्यशब्दस्याकारादेशः स्यशब्दलोपो वा आदघ्ना एव आदघ्नासः । आज्जसेरसुगि-( ७-१-५० ) ति जसोऽसुगागमश्छान्दसः । ह्रदा इवेति तुरीयपादस्थमत्रानुसन्धीयतेऽर्थवशादुपमानलाभाय । तथाचास्यप्रमाणोदका ह्रदा इवेति मध्यमप्रज्ञानाह । अपरे इति त्वे इत्यस्यार्थौ । सर्वनामत्वाज्जसः शी ( ७-१-१७ ) भावः । अथ मध्यमप्रज्ञानाह उपकक्षदघ्ना इति । कक्षस्य समीपमुपकक्षं तत्प्रमाणं येषान्त उपकक्षदघ्नाः पूर्ववदत्रापि साधनप्रक्रियोह्या । कक्षो बाहुमूलम् "बाहुमूले उभे कक्षा" वित्यमरः । कक्षसमीपप्रमाणोदका ( अल्पोदका )[1] ह्रदा इवेति । उः पादपूरण एव ॥ तथाचात्र आदघ्नास इत्यतिपरोक्षवृत्तिं तमिमं परोक्षवृत्तितामास्यदघ्ना इत्यनेन संपाद्यास्यप्रमाणेदाका इत्येवं प्रत्यक्षवृत्तितामापादितवान् ॥ इति ध्येयम् ॥

अथात्रैकपदनिरुक्तम्—

**आस्यमस्यतेः ॥ ११ ॥**

क्षेपार्थस्यासुधातोः ( दि. प. ) ऋहलोर्ण्यदिति ( ३-१-१२४ ) ण्यत् । अस्यते क्षिप्यते ह्येतदाभिमुख्येनान्नमित्यास्यम् ॥

**आस्यन्दत एनदन्नमिति वा ॥ १२ ॥**

आङुपसृष्टस्य स्रवणार्थस्य स्यन्दतेः ( भ्वा० आ० ) अन्येष्वपि दृश्यते-( ३-२-१०१ ) इति डः । अन्नं कर्तृ । एनदिति कर्म । अन्वादेशे नपुंसके एनद्वक्तव्य ( २-४-३४ वा. ) इति एनदादेशो द्वितीयैकवचने । एतदास्यमास्यन्दते द्रवीकरोत्यन्नम् । यद्वा एनदिति कर्तृ बाहुलकात्प्रथमैकवचनेऽप्येनत् । अन्नं ( शुष्कमपि ) प्राप्यासमन्तात्स्रवत्येव श्लेष्माणं येन तदार्द्रीकृतं ग्रसितुं शक्यते ॥ अथ दघ्नशब्दं परिमाणार्थकं नाम मत्वा निर्वक्ति—

**दघ्नं दघ्यतेः स्रवति कर्मणः ॥ १३ ॥**

स्रवत्यर्थस्य दघधातोः कर्मणि बाहुलकादौणादिको नन् इडभावश्च । स्रुततरमिव

---

१. ईषदल्पाः । नञोऽत्राल्पार्थे वृत्तिः । अनुदरा कन्येत्यत्र यथा । पठन्ति च । तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः । इति ॥ अब्राह्मणः । अपापम् । अनश्वः । अपशवो वाऽन्येगोऽश्वेभ्यः । अधर्म इति शिष्टमुदाहरन्ति ॥

२. प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतावुभाविति हि नियमस्तथा चात्र ( सूत्रे ) प्रमाणपदमूर्ध्वमानपरमेतद्विषये ॥

तद्भवत्युत्तरात्परिमाणात् ॥ यद्यप्ययं रुधादौ घातने पालने च पठितो न दिवादौ तथापि यास्कवचनादिवादित्वं क्षयत्यर्थकत्वं च कल्प्यते । उक्तं च । दिवादिषु भ्वादिवदाकृतिगणस्तेन क्षीयते मृग्यतीत्यादिसिद्धिरितीति ॥ एतच्च शब्दसाम्याद-न्यथापि निरुक्तं, प्रकृते तु दघ्नच्प्रत्यय एव प्रमाणार्थ इति व्यक्तमुक्तमधस्तात् ॥

**दस्यतेर्वा स्याद्विदस्ततरं भवति ॥ १४ ॥**

उपक्षयार्थस्य दसुधातोः ( दि. प. ) औणादिको नन्सस्य घो बाहुलकादिड्-भावश्च । दस्यतेर्वा दघ्नं स्यात् । इत्येवमपरथा व्युत्पाद्यार्थतो निर्ब्रवीति-विदस्ततर-मुपक्षीणतरं तद्भवत्युत्तरस्मात्परिमाणादिति ॥

अथ तुरीयं पादमर्थतो व्याचष्टे—

**प्रस्नेया ह्रदा इवैके प्रस्नेया ददृशिरे स्नानार्हाः ॥ १५ ॥**

स्नात्वा इत्यस्यार्थतो निर्वचनं प्रस्नेया इति । तत्रहि स्नातेः ( अ. प. ) कृत्यार्थे ( २-४-१४ ) त्वन् प्रत्ययः । सचार्हे कृत्यतृचश्च ( ३-३-१६९ ) इत्यर्हार्थे भवति । अत्रापि प्रकर्षेण स्नातुं योग्या इत्यर्थे स्नातेः अचो यत् ( ३-१-९७ ) इति यत् । ईद्यती-( ६-४-६५ ) तीत्वे गुणे प्रस्नेया इति स्नानार्हा अक्षोभ्योदका इति तदर्थः । एवंभूता ह्रदा इव एके प्रधानभूता महान्तः प्रज्ञया प्रस्नेया अगाधाः ( अगा-धप्रज्ञाः) ददृशिरे दृश्यन्ते । छान्दसो लिट् वर्त्तमान इह भवति । अत्र त्वेइत्यस्यार्थे एके इति । ददृश्रे इत्यस्य च ददृशिरे इति । उः पादपूरण एव ॥

अथात्रैकपदनिरुक्तम्—

**ह्रदो ह्रदतेः शब्दकर्मणः ॥ १६ ॥**

( अव्यक्त ) शब्दार्थस्य ह्राद्धातोः ( भ्वा. आ. ) पचाद्यच् । बाहुलकाद्ध्रस्वः । शब्दं ह्यसावभिहन्यमानः करोतीति ह्रदः ॥ प्रकारान्तरेण निर्वक्ति—

**ह्रादतेर्वा स्याच्छीतीभावकर्मणः ॥ १७ ॥**

शीतीभावार्थस्य ह्रादी सुखेचेति धातो-( भ्वा. आ. ) रुक्तवत्सिद्धिः । लस्य रत्वं पृषोदरादित्वात् । ग्रीष्मेऽप्यसौ शीतल एव भवञ्जनान् सुखयतीति ह्रद इत्युच्यते ॥

**अथापि समुच्चयार्थे भवति ॥ १८ ॥ ४ ॥**

अथापि अयमपरो निपातः समुच्चयार्थे भवत्येकतमः । त्वत् इति ॥ ४ ॥

अथास्योदाहरणम्—

**पर्याया इव त्वदाश्विनम् ॥ १ ॥** ( ऋ. प्रा. १२-१० )

इत्याह । किमुक्तं भवति—

**आश्विनञ्च पर्यायाश्चेति ॥ २ ॥**

इत्येवम् । त्वदिति समुच्चयार्थे भवति ॥

---

१. अशीतस्य शीतभवनं शीतीभावः । अभूततद्भावे "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः"-( ५-४-५० ) रिति च्विः । 'अस्य च्वौ'-( ७-४-३२ ) वितीत्वम् ।

**अथये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आग-**
**च्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति ॥ ३ ॥**

पदपूरणसामान्यादनुक्रमेऽयमथशब्दः । पूर्वं हि व्याख्याताः केऽपि सङ्ग्रहार्थीया-ऽऽदयः । ( १–२–३ ) तत्प्रसङ्गेन हीत्येवमादयोऽनर्थका अप्युक्ताः । ( १–२–४ ) प्रतिज्ञाप्रसक्तानेवाधुना पदपूरणान्वक्ष्यति । तत्सामान्यलक्षणन्तावदनुक्रम्यतेऽनेन । प्रवृत्ते–परिसमाप्ते अन्यैरेव वाक्यगतैः पदैरिति शेषः । अमिताक्षरेषु ग्रन्थेषु गद्य-ग्रन्थेषु । त एव मिताक्षरेषु पदपूरणा भवन्ति । उभयत्रापितु ते अनर्थकाः अर्था-न्तरावाचकाः ॥ कतमे पुनस्ते–इत्याह "कम् इम् इत् उ" इति ॥ एते हि प्रायेण पद-पूरणा एव । अन्ये पुनः "इव-न-चित्-न्वा"दयोऽर्थवन्तोऽपि । अर्थासम्भवे पदपूर-णा भवन्ति । लक्षणं हि तानपि व्याप्नोति । एते पुनः प्रायेणानर्थका एवेति विशेषतो निर्दिश्यन्ते । अथवा ते प्रायेणार्थवन्तः कदाचिदनर्थका इत्यतो विशेषतो निर्दिश्यन्ते[४]॥

अधुनोक्तान्कमीमिद्रून्समासतः प्रत्येकमुदाहरणैर्दर्शयति—

**निष्क्रमसश्चिदिन्नरो भूरितोका वृकादिव ॥**
**बिभ्यस्यन्तो ववासिरे शिशिरञ्जीवनायकम्[६] ॥ ४ ॥**

---

१. प्रकृतादर्थान्नकिञ्चिदर्थान्तरं द्योतयन्ति । पदमेव वाक्यमेव वा पूरयितव्यमित्ययमेव हि तेषामर्थो नान्यदर्थान्तरमस्ति । उक्तञ्च—

क्रिया वाचकमाख्यातमुपसर्गो विशेषवत् ॥
सत्वाभिधायकं नाम निपातः पादपूरणः ॥ १ ॥ इति ॥

२. उपलक्षणमेतदुक्तानां खलु-नून-मित्यादीनामनुक्तानाञ्च घादीनां, तद्यथा—

आ-घा-ता-गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामिम् ॥
उपबर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे ! पतिम्मत् ॥ १ ॥

( ऋ. सं० ७–६–७–१० )

भ्रातृभगिन्योः संवादोऽयम् ॥ काचिद्भ्रातरं पतिं कामयतेस्म बाल्याद्वालिश्याद्वा । तदा विज्ञानसम्पन्नो भ्राता तां बोधयति । हे सुभगे आ-गच्छान्-आगमिष्यन्ति ता-तानि उत्तरा-उत्तराणि युगानि-कालविशेषाः यत्र जामयो भगिन्यः अजामि-भ्रातरं पतिं कृणवन्-करि-ष्यन्ति । यस्मादेवंतस्मात्त्वमिदानीं मत्मत्तोऽन्यं पतिं भर्त्तारमिच्छस्व कामयस्व । तदनन्तरं वृषभाय तव योनौ रेतः सेक्त्रे पुरुषायात्मीयं बाहुमुपबर्बृहि शयनकाले उपबर्हणं कुरु । इतिहि मन्त्रार्थः । अत्र"घा" इत्यनर्थकः पदपूरणः ॥

३. इति तेष्वतिव्याप्तिवारणाय स्वरूपतोऽप्येषां निर्देश उक्तः ॥

४. इदन्त्वत्रावधेयम् पूर्वोक्तस्य विनिग्रहाद्यर्थी यस्यायमपवाद इति विज्ञायेतेति ॥

५. संक्षेपतः ॥ ६. एतद्वचनं कल्पमिति न दृढं प्रतीमः । दुर्गेण तु केचिदेवं कृतशेष-मधीयत इत्युक्तम् । क्वचित्तु–मुञ्चामि त्वा हविषा जीवनाय कम् । अज्ञातयक्ष्मादुत राज-यक्ष्मात् ॥ ( ऋ. सं. ८–८–१९–१ ) इति पठ्यते । अत्र सायणः । हे यक्ष्माभिभूत ! हविषाऽनेन चरुणा साधनेन त्वा त्वामज्ञातयक्ष्मादयमेतत्संज्ञ इत्यज्ञातः शरीरगतो रोगोऽ-

चिदिर्भरः केचिन्मनुष्याः निष्कासः निर्वसनाः । अपित्र । भूरितोका बहुपत्याः (दरिद्राः) वृकान्मार्गरोधकात्स्तेना-(निघ० ३-२४) च्छृगालादिव बालघातकाद्धि-मादिति शेषः बिभ्यस्यन्तः पुनःपुनर्भृशं वा बिभ्यतः सन्तः हेमन्ते ववाशिरे पुनः पुनर्भृशं वा वाशन्ते कुत्सितं शब्दं कुर्वन्ति । वाशृ शब्दकुत्सायाम् (भ्वा. आ.) किम्—

**शिशिरं जीवनाय ॥ ५ ॥**

शिशिरमस्माकं जीवनाय, आगच्छतीति शेषः । अल्पतरशीतं हि शिशिरं सुखं तत्र जीविष्याम इत्यभिप्रायाः ॥ अत्र (मन्त्रे) कमित्यनर्थकः पादपूरण एवेति स नोक्तः ॥ अथ निगमप्रसक्तं शिशिरशब्दं द्विधा निर्ब्रवीति—

**शिशिरं शृणातेः शम्नातेर्वा ॥ ६ ॥**

हिंसार्थकस्य शॄधातोः (क्र्या. उ.) अजिरशिशिरेत्यादिना (उ. १-५३) निपातः । शृणाति हिनस्तीति शिशिरम् । अर्धर्चादिः (२-४-३१) । अथवा शम्नातेर्हिंसार्थस्यैव । नार्थकृतो विशेषः किन्तुसाधनकृतः । हिनस्ति तस्मिन्कालेऽप्रति-बध्यमानो दवाग्निरतिशयेन शुष्कानोषधिवनस्पतीन् इति ॥

अथ ईमित्यस्योदाहरणम्—

**एमेनं सृजतासुते ॥ ७ ॥** (ऋ. सं. १-१-१७-२)

इति । एषैन्द्री गायत्री मधुच्छन्दस आर्षम् ॥ अत्र ईमिति पदपूरण इति बोध-यितुं पादार्थमाह—

**आसृजतैनंसुते ॥ ८ ॥**

मन्दिमिन्द्राय मन्दिने । चक्रिं विश्वानि चक्रये ॥ २ ॥ इत्यस्य शेषः । हे अध्वर्यवः ! सुतेऽभिषुते चमसस्थे सोमे एनं सोममिन्द्रायेन्द्रार्थमासृजत आभिमुख्येन सृजत । पुनरभ्युन्नयतेति सायणः । कीदृशमेनं मन्दिं हर्षहेतुं चक्रं साधुकरणशीलं

---

ज्ञातयक्ष्मस्तादृशादुत राजयक्ष्माद्रोगात् मुञ्चामि मोचयामि (अन्तर्भावितण्यर्थः) विश्लेष-यामि । किमर्थं जीवनाय कम् । जीवनार्थम् । इहलोके चिरकालावस्थानायेत्यर्थः । कमिति पदपूरक एवेति ॥

१. अत्र किं शब्दोऽनुक्तोऽप्यर्थवशादध्याहृतः । इदितिपदपूरण एवेति वयमुत्पश्यामः ॥

२. वश्यन्त इतिदुर्गः । वशकान्तौ (अ. प.) व्यत्ययेन श्यन्नात्मनेपदे । कान्तिरिच्छा । भृशमिच्छन्तीत्यर्थः ॥

३. शीतार्त्तस्य दन्ताभिघातपूर्वकः शब्दो दारिद्र्यमूलकः कुत्सित एव भवतीति भावः ॥

४. अन्येत्वाहुः । तत्रहि प्रायेण प्रचुराणि शरद्धान्यानि भवन्तीति शिशिरजीवनार्थं तेषाम् ॥ इति ॥

५. अयं क्र्यादावपठितोऽपि वैदिकत्वात्तत्रोक्तः । तथाच "बहुलमेतन्निदर्शन"मिति धातु-पाठपठितगणवार्त्तिकमुपादायोक्तम्–(सि. कौ.) अन्येतु दशगणीपाठो बहुलमित्याहुः । तेनापठिता अपि सौत्रलौकिकवैदिका बोध्या इति ॥

६. शुक्रामन्थिचमसगणे पुनरभ्युन्नयनमापस्तम्बेनोक्तम् । तथाचाग्निष्टोमप्रकरणे आ० सूत्रम् "होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्त्तध्वमिती"ति ॥

कीदृशायेन्द्राय मन्दिने हर्षयुक्ताय । विश्वानि सर्वाणि कर्म्माणि चक्रये कृतवते सर्वकर्म्मनिष्पादनशीलायेत्यर्थः ॥ २ ॥

अथेदित्यस्योदाहरणम्—

**तमिद्वर्द्धन्तु नो गिरः ॥ ९ ॥** ( ऋ. सं. ७–१–२०–१४ )

इति । गायत्र्येषा सौमी । अमहीयोराङ्गिरसस्येयमार्षम् ॥ अत्रेदिति पादपूरण इति बोधयितुं पादार्थमाह—

**तं वर्द्धयन्तु नोगिरः स्तुतयः ॥ १० ॥**

वत्सं संशिश्वरीरिव । य इन्द्रस्य हृदंसनिः ॥ १४ ॥ इत्यस्याः शेषः ॥ अर्थश्च—नोऽस्माकमेता गिरो ग्रावस्तुतौ विनियुक्ता वाचः स्तुतिरूपास्तं सोमं वर्द्धन्तु वर्द्धयन्तु (अन्तर्भावितण्यर्थः) । यः सोमः इन्द्रस्य हृदंसनिर्हृदयस्य सम्भक्ता । तत्र दृष्टान्तः । वत्सं बालं शिश्वरीरिव यथा शिश्वर्यो बद्धपयस्का मातरो वत्सं वर्द्धयन्ति तद्वदिति ॥ १४ ॥ अथ निगमप्रसक्तं "गिर"–इत्येतन्निर्वक्ति—

**गिरोगृणातेः ॥ ११ ॥**

गॄशब्दे इति धातोः (क्र्या. प.) क्विप् । ॠत इद्धातोः ( ७–१–११० ) इतीत्वं रपरत्वम् ।

अथोकारस्योदाहरणम्—

**अयमु ते समतसि ॥ १२ ॥** ( ऋ. सं. १–२–२८–४ )

इति । शुनःशेफो ( हरिश्चन्द्रमखे वधाय ) नियुक्त आत्मानं मोचयितुमिच्छन्नेतया गायत्र्येन्द्रं तुष्टाव । अत्रोकारः पदपूरण इति व्याचष्टे—

**अयन्ते समतसि ॥ १३ ॥**

कपोत इव गर्भधिम् । वचस्तच्चिन्नओहसे ॥ ४ ॥ इत्यस्याः शेषः । हे इन्द्र ! अयन्ते त्वदर्थः सोमः ( यं त्वं नित्यमेव ) समतसि[2] संपतसि तासु २ क्रियास्वाहूयमानः इति वाक्यशेषोऽर्थवशाद्बोध्यः । अत्र दृष्टान्तः कपोत इव गर्भधिम् । कवेरोतच्पश्चे ( उ. सू. १–६२ ) ति साधुरव्युत्पन्नो वा कपोतः कम्पतनः कुत्सितपतनोवेति दुर्गः । सयथा गर्भधिं[3] गर्भधारिणीं कपोतीं अण्डाश्रयं वा नीडं प्रति पुनः पुनः पतति तद्वत् । सोऽयमृत्विग्भिस्त्वदर्थमभिषुतः सोमः । अथ किमस्माभिः कारि-

१. अन्ये व्याचक्षते—वत्सं संशिश्वरीः एकशिशुका बह्व्यो गाव इव । यथा मृतवत्साः पर्यायेणैकं वत्सं स्वैःस्वैः पयोभिर्वहनादिसमर्थं कुर्य्युः । एवमस्माभिरभिषुतं सोमं वर्द्धयन्तु प्रजातवीर्य्यं कुर्वन्तु देवतर्पणायेत्येवम् ॥

२. अत सातत्यगमने ( भ्वा० प० ) सातत्येनाविच्छेदेन ( नैरन्तर्येण ) गमनं सातत्यगमनं तत्फलितमर्थमाह नित्यमेव सम्पतसीति । पततिर्गत्यर्थ एव ( भ्वा० प० ) इति ॥

३. गर्भोऽस्यां धीयत इति "कर्मण्यधिकरणेचेति ( ३–३–९३ ) किप्रत्ययः । आतोलोपः ( ६+४–६४ ) ॥

ष्यसि ? मोक्ष्यास्मान् । किं वा वच ( एव ) तदेतन्नः स्तुतिलक्षणं न ऊहसे न वितर्कयसि रोक्ष्यमाणानाम् ? केनाप्यभिप्रायेण वयमेतद्ब्रूमः । कैर्वा युष्मद्गुणैर्न संयुक्तोऽयं सोमो यदिमं परिगृह्यास्मानतो यूपान्न मोचयसि । किं वा वच ऐवैतच्छ्रुत्वाऽवबुध्यार्थमवधार्यास्तितामस्माकं कारुण्यान्मोचयास्मान्किन्तेऽस्माभिरयमेतेऽस्मत्तः प्रतिविशिष्टतरः सोमोऽभिषुत इति तात्पर्यार्थः ॥ ४ ॥

**इवोऽपि दृश्यते ॥ १४ ॥ ५ ख. सू. ॥**

कदाचिदनर्थकः पदपूरण एवेति वाक्यशेषः ॥

किमुदाहरणम्—

**सुविदुरिव सुविज्ञायेते इव ॥ १ ॥**

इत्येते उदाहरणे । तत्र सुष्ठुविदुर्यज्ञं ब्राह्मणा इत्याद्यस्यार्थः । अत्रेवोऽनर्थक एव वाक्यपूरणः । सुष्ठु विज्ञायेते यज्ञो नक्षत्रञ्च ब्राह्मणैरिति द्वितीयस्यार्थः । अत्रापीवोऽनर्थक एव वाक्यपूरणः ॥ इत्येवं पदपूरणान्व्याख्याय निपातसमुदायं दर्शयति—

**अथापि नेत्येष इदित्येतेन संप्रयुज्यते परिभये ॥ २ ॥**

निपातसमुदायाधिकारार्थोऽयमथशब्दः । इतिः सम्भावने । अथायमेवेदिति केवलः प्रयुज्यमानः पदपूरणो भवति । अपि चैष एव न इत्येतेन संयुक्तः प्रयुज्यते परि सर्वतो भये अर्थे इति शेषः । तद्यथा—

**हाविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् ॥**
**शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम ॥ १ ॥**
**इति ॥ ३ ॥**

नारदेन किल वञ्चयितुं विप्रलभ्यमाना असुरपत्न्यो भर्तॄन्प्रति·तमनेन मन्त्रेण प्रत्यूचुः । एके तावत् इतो भूलोकात् हविर्भिः पुरोडाशादिभिर्निमित्तभूतैः स्वः स्वर्गलोकं सचन्ते गच्छन्ति स्म ॥ अथ एके सवनेषु यज्ञेषु सोमान्सुन्वन्तः अभिषुण्वन्तः । तेन कर्म्मणेत्यर्थः । अन्ये शचीः शच्या वाचा स्तुतिभिः । सुब्व्यत्ययश्छान्दसः । मदन्तः मादयन्तः ( अन्तर्भावितण्यर्थः ) देवांस्तर्पयन्तः । उत अपिच दक्षिणाभिः स्वः सचन्ते इत्येतदेवानुषज्यते । ( तत्रैवंसति । वयमेतेषां स्वः श्रेयसोपायानामसत्त्वाद्भर्तॄन्परिचरेम ) नेदितिपरिभयोक्तिः । वयमेतेषामभ्युपजिह्मा-

१. अयमपि कल्प इति न दृढं प्रतीमः । दुर्गेणापि "नेज्जिम्हायन्त्यो नरकं पतामे—"ति वाक्यमुक्त्वा "मृग्यः शेष" इत्यभिधाय केचित्त्वेवं कृतशेषमत्राधीयत इति हविर्भिरित्यादिश्लोकमभिदधौ ॥

२. प्राणिषु तेन तेनाभ्युपायेन स्वः श्रेयसं प्रत्यभ्युद्यतेषु सत्सु ॥

३. अस्माभिरज्ञत्वानुष्ठानत्वादिति तात्पर्य्यम् ।

४. स्वभर्तॄणाम्पुरस्तात् ( अग्रे ) सतीधर्म्ममपहाय कपटमाचरन्त्यो नरकं पतामेति सम्भावयामः ॥

यन्त्यो जिह्म-( कपट-) माचरन्त्यो ( भगवन् ! ) नरकं पताम । नह्यन्यो भर्तृपरिचर्य्यातः स्त्रियाः कश्चन धर्मोऽस्तीति भावः ॥ १ ॥

नरकशब्दं निर्ब्रवीति—

**नरकं न्यरकं नीचैर्गमनम् ॥ ४ ॥**

नीचैरस्मिन्नर्यते गम्यत इति नरकम् । निपूर्वाद्गत्यर्थादधातोः ( भ्वा. प. ) अधिकरणे वुन् गुणः नीत्ययं नीचैरित्यर्थकस्तस्य नादेशः पृषोदरादित्वात्ततश्च शकन्ध्वादेराकृतिगणत्वात्पररूपम् । यद्वा इकारलोप एव पृषोदरादित्वादित्याह—न्यरकमिति ॥

**नास्मिन्रमणकं स्थानमल्पमप्यस्तीति वा ॥ ५ ॥**

वा-अथवा नास्त्यस्मिन् रमणकं रतिजनकं स्थानमल्पमपीति नरकम् । न रतिकरम् । न रमणकमितिवाऽर्थः । पृषोदरादित्वाद्वर्णलोपेन वर्णविपर्ययेण वा साधुः ॥

**अथापि न चेत्येष इदित्येतेन संप्रयुज्यतेऽनुपृष्टे ॥ ६ ॥**

अथाप्ययमपरो निपातसमाहारो न चेति । एष इदित्येतेन संयुक्तः प्रयुज्यते केनचिदनुपृष्टे[1] ( सति प्रतिवचनं भवति ) तद्यथा—

**न चेत्सुरां पिबन्तीति ॥ ७ ॥**

कश्चित्कश्चित्पृच्छति तिष्ठन्ति गृहे वृषलाः ? इति । स प्रत्याचष्टे तिष्ठन्तीति । ततो यदि तिष्ठन्ति किमिति[2] नागच्छन्तीति पुनरनुपृष्टे प्रतिवक्ति न चेदिति । यदि सुरां न पिबन्ति इत्यर्थः ॥ अथ सुरापदं निर्ब्रवीति—

**सुरासुनोतेः ॥ ८ ॥**

सा ह्यभिषूयतेऽनेकैर्द्रव्यैः पिष्टादिभिरिति[3] सुरेत्युच्यते । षुञ् अभिषवे[4] ( स्वा. उ. ) अस्मादौणादिको रक्प्रत्यय; कर्म्मणि । कित्त्वाद्गुणाभावः ॥

अथोपक्रान्तं निपातलक्षणमुपसंहरति—

**एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः ॥ ९ ॥ ६ ख. सू. ॥**

**इति या. मु. प्र. नि. शा. प्र. ध्या. तृ. पादः ॥**

एवमनेन प्रकारेण उच्चावचेषु बहुप्रकारेषु अर्थेषु निपतन्ति प्रयुज्यन्तेऽन्येऽपि समाहृता द्वित्रा अपि असमाहृताश्चापि कियन्तस्ते लक्षणशास्त्रमेतच्चार्थनिर्वचनशास्त्रमुपेत्योपगम्यानुप्रविश्येक्षितव्या द्रष्टव्याः कः कस्मिन्नर्थे वर्त्तत इत्येवम् परीक्ष्या इत्यर्थः ॥ इति श्रीमद्यास्कमुनिप्रणीतनि. लघुविवृतौ नैघ. काण्डे प्रथमाध्यायस्य तृतीयः पादः ॥

---

१. पुनः पृष्टे । प्रश्नानन्तरमुत्तरे दत्ते पुनः प्रश्ने सतीति यावत् ॥

२. तर्हि किमर्थम् ॥

३. पैष्टी, गौडी, माध्वीत्यादिसुराभेदाः ॥

४. अभिषवोऽत्र सुरासन्धानं ( सुरोत्पादनप्रकारः ) नतु स्नपनादि ॥

५. व्याकरणम् ॥

## १ अ० ४ पादः ।

**इतीमानि चत्वारि पदजातान्यनुक्रान्तानि ॥**
**नामाख्याते चोपसर्गनिपाताश्च ॥ १ ॥**

इतीत्ययमधिकारसमाप्त्यर्थः । इमानि अनुपदोक्तानि चत्वारि पदजातानि चतस्रः पदजातयः पदसामान्यानि "जातिर्जातञ्च सामान्य" मित्यमरः । अनुक्रान्तानि पूर्वं-माख्यातानि, ततो नामानि, तत उपसर्गाः, ततो निपाता इत्येवमानुपूर्व्येण क्रान्तानि वर्णितानि, व्याख्ययेति वाक्यशेषः । कतमानि पुनस्तानि ? नामाख्याते चोप-सर्गनिपाताश्चेति । अयञ्च प्रतिज्ञाभ्यासो निगमनार्थः । प्रतिज्ञाभ्यासो हि निगम

**तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ॥ २ ॥**

तत्र तस्मिन्नेव पदचतुष्टये यानि नामानि तानि सर्वाण्येवाविशेषेणाख्यातजानीत्येवं शकटस्य गोत्रापत्यं नडादिभ्यः फक् ( ४–१–९९ ) फस्यायन् ( ७–१–२ ) आदि-वृद्धिः । शाकटायन आचार्यो ब्रवीतीति वाक्यशेषः । तथाच पतञ्जलिरपि-सर्वंनाम-धातुजमाह शकटस्य च तोकमिति महाभाष्य आह । नैरुक्तानां निरुक्तशास्त्रविदां तदधीते तद्वेदे-( ४–२–५९ ) त्यण् आदिवृद्धिः । ( पूर्वेषां सर्वेषामविशेषेण गार्ग्य-वर्ज्यं ) चैष समयः सिद्धान्तः । "समयाः शपथाचारकालसिद्धान्तसंविद" इत्यमरः ॥ तदत्र मतान्तरमाह—

**न सर्वाणीति गार्ग्यः ॥ ३ ॥**

न सर्वाणि नामान्याख्यातजान्यपितु कानिचिदेवेति वक्ष्यमाणेन तद्यत्रेत्यादिना सम्बन्धः । इति गर्गस्य गोत्रापत्यम् गर्गादिभ्यो यञ् ( ४–१–१०५ ) आदिवृद्धिः । गार्ग्य आचार्योब्रवीतीतिवाक्यशेषः ॥ न केवलं गार्ग्य एवापितु—

**वैयाकरणानाः ॥ ४ ॥**

व्याकरणं व्याक्रियन्ते धात्वादिप्रविभागेण व्युत्पाद्यन्ते शब्दा अनेनेति करणेऽर्थे व्याङ्पूर्वात्करोतेः करणाधिकरणयोश्चे–( ३–३–११७ ) ति ल्युट् । तद्विदन्तीति वैयाकरणाः । वेदितर्य्यण् तद्धितः ( ४–२–५९ ) आदिवृद्ध्यपवाद ऐजागमः ( ७–३–३ ) तेषाम्मध्ये चैके पाणिनिप्रभृतयो न सर्वाणीत्युक्तमर्थं ब्रुवते ॥ अत एव 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति तेषां समयः ॥

---

१. व्याख्यालक्षणमुक्तमधस्तात् (२ पृ. २१)॥ तत्राक्षेपसमाधाने नामविषये अवशि-ष्येतेऽन्यत्सर्वं लक्षणोदाहरणमुखेन दर्शितमिति व्याख्यया वर्णितानीत्यस्य तात्पर्यम् ॥

२. नाम्नस्तु किञ्चिदवशिष्यत इति यदुपप्रेक्षितमधस्तात्प्रतिज्ञातञ्च "तत्पदचतुष्टलक्षणा-नन्तरं चतुर्थपादेन वक्ष्यत" इति । तदत्र यथावसरं विशेषचिन्तापक्षमनुसृत्याक्षेपसमाधान-रूपव्याख्याधर्म्मेणोच्यते ॥

३. "अपत्यं तोकं तयोः सम–" इत्यमरः ॥

४. सिद्धान्तः । "समयाः शपथाचारकालसिद्धान्तसंविद" इत्यमरः । तेषां पाणिनीया

**तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणे-
नान्वितौ स्यातां संविज्ञातानि तानि ॥ ५ ॥**

१ तदेतत्प्रपञ्च्यते गार्ग्यपक्षेणेति पर्युपयुक्तस्तच्छन्दः । इह हि त्रिधा व्यवस्था नाम्नाम् । प्रत्यक्षक्रियाणि, प्रकल्प्यक्रियाणि, अविद्यमानक्रियाणि च नामानि भवन्ति । तत्र-यत्र येषु नामसु स्वर उदात्तादिः । संस्कारः प्रकृतिप्रत्ययादिः । तौ समर्थौ सङ्गतार्थौ प्रादेशिकेन व्याकरणलक्षणानुगतेन गुणेन धातुनाऽन्वितावनुगतौ स्यातां भवेतान्तानि सं-सममैकमत्येनाख्यातजानीत्येवं विज्ञातानि । न तत्र विप्रतिपत्तिः । यथा कारकहारकादीनि । प्रत्यक्षक्रियाणि ह्येतानि ॥ अत उत्तरं नपुनरिति वाक्यशेषो द्रष्टव्यः—

**गौरश्वः पुरुषोहस्तीति ॥ ६ ॥**

इत्येवमादीनि पुनर्नसंविज्ञातानि (प्रत्यक्षक्रियाणि) अपि तु—प्रकल्प्यक्रियाणि । एतेषु हि प्रकल्प्यन्ते क्रिया न साक्षादुपलभ्यन्ते । अविद्यमानक्रियाणि तु डित्थो डवित्थोऽरविन्दोऽर्वाडित्येवमादीनि ॥

अथ शाकटायनमतमाक्षिपति—

**अथ चेत्सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च(न)
तत्कर्म्म कुर्यात्सर्वन्तत्सत्वं तथाचक्षीरन् ॥ ७ ॥**

---

नाम् अव्युत्पन्नानीत्यस्योद्देश्यत्वेन विधेयत्वेन वा पाणिनितात्पर्याविषयाणीत्यर्थः । अन्यथाहि वदतो व्याघातः । उणादय इत्यस्यहि उणादिप्रत्ययान्तानीत्येवार्थः । नहि तान्यव्युत्पन्नानि भवितुमर्हन्ति । अथाव्युत्पन्नानि, नहि तद्युणादिप्रत्ययान्तानि । उद्देश्यत्वेनेत्याद्युक्त्या निमित्तत्वेन पाणिनितात्पर्यविषयताभ्युपगमस्तेन "अयामन्ताल्वाय्येत्न्विष्णुपु" (पा. ६–४–५५) इति सूत्रं संगच्छते । तदेतच्छब्देन्दुशेखरे सुव्यक्तं द्रष्टव्यम् ॥

१. समर्थतानामोपपत्तिरुच्यते ॥

२. यथैव हि लक्षणाविप्रतिपत्त्या स्वरोऽवस्थित एवं संस्कारोऽपि यत्रेत्यर्थः ॥

३. याहि तस्मिन्द्रव्येऽवस्थिता यद्धेतुकश्च तस्य नामधेयप्रतिलम्भोऽभिप्रेतः सा प्रदेशाख्या क्रियेत्युच्यते । सा च प्रधानतया पदेऽवतिष्ठते । तद्वाचकश्च धातुः प्रादेशिको गुण इत्युच्यते । गुणः शेषोऽङ्गमित्यनर्थान्तरम् । तथाच प्रदिश्यते नाम्ना निर्दिश्यते द्रव्यमनयेति प्रदेशः क्रिया नामधेयप्रतिलम्भहेतुभूता तामभिधत्त इति प्रादेशिको धातुरित्येके मन्यन्ते । अपरे पुनरन्यथैतद्व्याचक्षते तद्दुर्गभाष्यादौ द्रष्टव्यम् ॥

४. वस्तुतस्तु अत्र संविज्ञातानीतिपदे तन्त्रावृत्यादिन्याय आश्रीयते । एकस्य पूर्वेणापरस्य च परेणाभिसम्बन्धः । तत्र संविज्ञानमिति रूढिशब्दस्य संज्ञात्र करिष्यते (दै. का. १–३–६)। तथाच संविज्ञातानि संविज्ञानपदानि तानि यथा गौरश्वः पुरुषोऽहस्तीत्येवमादीनि । नह्येषां गवादीनामष्टाध्याय्यां व्युत्पत्तिलक्षणमस्ति । तथाचोक्तमुणादयोऽव्युत्पन्नानि प्रातिपदिकानीति । तस्माद्रूढिशब्दा एवैते भवन्ति इति ॥ पाचकादयस्तु न्यायवत्कार्म्मनामिकसंस्कारेणानुगता यौगिकशब्दा इत्येवमन्ये व्याचक्षते ॥

